॥ श्रीः ॥

संस्कृत-ग्रन्थमाला
२००

॥ श्रीः ॥

# मुक्तावली-तत्त्वालोकः

( गुणनिरूपणान्त-परिवर्धितसंस्करणम् )



प्रकाशक

चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

THE
HARIDAS SANSKRIT SERIES
200

(193)

# मुक्तावली-तत्त्वालोकः

सर्वतन्त्रस्वतन्त्रश्रीबच्चाझाशर्मान्तेवासिनैयायिकप्रवरश्रीदामोदरझाशर्मात्मज-
काशीहिन्दूविश्वविद्यालयीयसंस्कृतमहाविद्यालयाध्यापक-

न्याय-वेदान्त-व्याकरणाचार्य-लब्धस्वर्णपदक—

**श्री पण्डित रुद्रधरझा शर्मणा**

विरचितः

प्रस्तावनालेखकः

**श्री पण्डित आनन्दझा न्यायाचार्यः**

( परिवर्धितं तृतीयं संस्करणम् )



THE
CHOWKHAMBA SANSKRIT SERIES OFFICE
Post Box 8 ] VARANASI-1 [ Phone 63145
सं० २०२९ ] मूल्य १-५० [ सन् १९७२

# प्रस्तावना

[ नैयायिकप्रवर श्री पण्डित आनन्द झा न्यायाचार्य
प्राध्यापक : लखनऊ विश्वविद्यालय, लखनऊ ]

सुविदितमेवेदं संस्कृतवाङ्मयसम्पर्कमुपेयुषां सर्वेषां यत् तत्र तत्र तत्तत्परीक्षासु पाठ्यपुस्तकतया तदधिकारिभिर्निर्धारिता हि न्यायसिद्धान्तमुक्तावली दुरवबोधैव ननु धीधनव्यतिरेकिभिः। प्रश्नोत्तरभावमादधत्या कृत्यानया सरलसरलया पण्डित श्री रुद्रधर झा व्याकरण–न्याय–वेदान्ताचार्यीयया मन्ये स्यान्महानुपकारस्तेषामन्तेवसतां ये हि महापरिश्रममस्वीकृत्याऽपि भवन्ति नितरां समुत्सुकास्तत्तत्परीक्षासाफल्याय । इति ।

—आनन्द झा

॥ श्रीः ॥

# मुक्तावली-तत्त्वालोकः

## अथ प्रत्यक्षखण्डम्

नवीननीरदश्यामं, रामं राजीवलोचनम् ।
जानकीजानिमास्तौमि, चिदानन्दमयं विभुम् ॥

१. प्रश्नः—ननु मङ्गलं न विघ्नध्वंसम्प्रति न वा सम्प्राप्तिम्प्रति कारणमिति विश्वनाथः, एतद्ग्रन्थोत्थाने किं बीजम ? किमेतावता ग्रन्थेन साध्यते ? अत्र समाप्तिपदोपादानस्य च क आशयः ?

उत्तरम्—अथ मङ्गलाचरणमयुक्तं निष्फलत्वादिति केषाञ्चित्प्रश्ने सति तत्र निष्फलत्वमेवासिद्धमिति सिद्धान्तिना स्वरूपासिद्धिशङ्कायां विहितायां तदुत्तरतया वक्तव्ये मङ्गलं निष्फलं यावत्फलविशेषशून्यत्वादित्यनुमाने स्वरूपासिद्धिवारणमेव "ननु मङ्गलमि"त्यादिग्रन्थोत्थाने बीजम् ।

एतावता ग्रन्थेन मङ्गलं निष्फलं यावत्फलविशेषशून्यत्वादित्यनुमितिघटकहेतोः स्वरूपासिद्धता निवार्यते । तथाहि—तत्सत्त्वे तत्सत्त्वमित्यन्वय—तदभावे तदभाव इति व्यतिरेकाभ्यां सर्वत्र कारणता निश्चीयते । एवं तत्सत्त्वे तदभाव इत्यन्वयव्यभिचारेण तदभावे तत्सत्त्वमिति व्यतिरेकव्यभिचारेण वा सर्वत्र तदभावो मीयते । तथा च कादम्बर्यादौ मङ्गलसत्त्वेऽपि विघ्नध्वंससमाप्त्योरभावेन, नास्तिकग्रन्थे मङ्गलाभावेऽपि निर्विघ्नसमाप्तिसत्त्वेन च नवीनसम्मतविघ्नध्वंसफलकत्वस्य, प्राचीनाभिमतसमाप्तिफलकत्वस्य च मङ्गलेऽसंभवात् तत्रोक्तहेतोः सत्त्वेन न भवति तत्र स्वरूपासिद्धता ।

ननु मङ्गले विघ्नध्वंसाजनकत्वमात्रसाधनेनैव तत्र प्राचीनसम्मतविघ्नध्वंसद्वारा समाप्तिफलकत्वस्याप्यसिद्ध्या कृतं समाप्तिपदेनेति चेन्न, स्वतः सिद्धविघ्नात्यन्ताभाववत्कृतमङ्गलस्यादृष्टद्वारा समाप्तिफलकत्वस्यासाधनाय तदुपादानादिति बोध्यम् ।

२. प्रश्नः—मङ्गलस्य सफलत्वानुमानं कीदृशम् ? कः प्रकृते तदुपयोगः ? का तद्धेतुघटकपदानां व्यावृत्तिः ? कस्तद्धेतुघटकपदार्थः ? कश्चात्र सफलत्वपदार्थः ?

उत्तरम्—अथ मङ्गलम् सफलम् अविगीतशिष्टाचारविषयत्वात्, दर्शादिवदिति मङ्गलपक्षकसफलत्वसाध्यकानुमानाकारः।

अनुमानस्यास्य मङ्गले सफलत्वसाधनद्वारा मङ्गलाचरणस्यौचित्यसूचने समुपयोगः।

चैत्यवन्दने व्यभिचारवारणाय शिष्टपदम्। श्येनयागे व्यभिचारवारणाय अविगीतपदम्।

अविगीतत्वञ्च बलवदनिष्टाननुबन्धित्वम्। शिष्टत्वञ्च फलसाधनतांशे भ्रान्तिराहित्यम्। आचारः कृतिः, विषयत्वश्रवणात्। सुखे व्यभिचारवारणाय विषयत्वं विधेयतारूपं विवक्षितम्।

बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वमेव प्रकृते सफलत्वपदार्थः। तेन श्येनयागस्य शत्रुवधफलकत्वेऽपि सफलत्वाभाव इति दिक्।

३. प्रश्नः—प्राचीनमते मङ्गलस्य केन प्रमाणेन किंफलकत्वम् ? का विघ्नध्वंसावश्यकता ? कीदृशः समाप्तिमङ्गलयोः कार्यकारणभावः ? कथञ्चान्वयव्यतिरेकव्यभिचारपरिहारः ?

उत्तरम्—अथ प्राचीनमते मङ्गलस्यानुमानेन सफलत्वे सिद्धे मङ्गलं समाप्तिफलकं समाप्त्यन्याफलकत्वे सति सफलत्वादित्यनुमानेन तत्र समाप्तिफलकत्वं सिद्ध्यति। न च मङ्गलस्य विश्वजिद्यागवत् स्वर्गफलकत्वकल्पनया तत्र विशेषणासिद्धिरिति वाच्यम्, संभवति दृष्टफलकत्वे अदृष्टफलकल्पनाया अन्याय्यत्वस्य मीमांसकादिभिरप्यभ्युपगमात्। ग्रन्थोऽयं समाप्यतामिति ग्रन्थकर्त्रभिलाषोपनीतसमाप्तिफलकत्वस्यैवौचित्याच्च।

न च विघ्नध्वंसस्यानावश्यकताऽस्तीति वाच्यम्, मङ्गलस्य विघ्नध्वंसादिद्वारैव समाप्तिजनकत्वस्य प्राचीनैरभ्युपगमात्। द्वारत्वञ्च तज्जन्यत्वे सति तज्जन्यजनकत्वम्।

स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्तासम्बन्धेन समाप्तिं प्रति स्वजन्यविघ्नध्वंसवत्तासम्बन्धेन मङ्गलं कारणमिति समाप्तिमङ्गलयोः कार्यकारणभावः। तत्र विघ्नध्वंसवत्ता च स्वरूपसम्बन्धेन। समाप्तिश्च चरमवर्णध्वंसरूपा।

नास्तिकग्रन्थे समाप्तिदर्शनात् जन्मान्तरीयमङ्गलस्य कल्पनया व्यतिरेकव्यभिचाराभावः। प्रचुरस्य बलवत्तरस्य वा विघ्नस्य ध्वंसम्प्रति प्रचुरस्य बलवत्तरस्य वा मङ्गलस्य कारणत्वाभ्युपगमेन कादम्बर्यादौ समाप्त्यदर्शनेन तादृशमङ्गलाभावस्य तादृशविघ्नस्य च कल्पनया अन्वयव्यभिचाराभाव इति बोध्यम्।

४. प्रश्नः—नवीनमतो मङ्गलस्य कया युक्त्या किं फलम्? कीदृशः मङ्गलविघ्नध्वंसयोः कार्यकारणभावः? मङ्गलञ्च विघ्नध्वंसविशेषे कारणं, विघ्नध्वंसविशेषे च विनायकस्तवपाठादीतिग्रन्थसूचितः विशेषकार्यकारणभावः कीदृशः? कथञ्चान्वयव्यतिरेकव्यभिचारवारणम्?

उत्तरम्—अथ क्वचिद्भोगेन विघ्नध्वंसे समाप्तिः, क्वचिच्च मङ्गलेन विघ्नध्वसे समाप्तिरिति समाप्तिं प्रति मङ्गलस्यान्यथासिद्धत्वात् विघ्नो निवर्त्यतामिति कामनया मङ्गलाचरणाच्च मङ्गलस्य विघ्नध्वंस एव फलम्, समाप्तिं प्रति तु बुद्धिप्रतिभादि, प्रतिबन्धकसंसर्गाभावतया विघ्नध्वंसादि च कारणम्। नचैवं स्वतःसिद्धविघ्नात्यन्ताभाववत्कृतमङ्गलस्य निष्फलत्वापत्तिः, तस्या इष्टत्वात्। नचैवं मङ्गले विघ्ननाशकताबोधकवेदस्याप्रामाण्यशङ्का, सति विघ्ने तत्र तन्नाशकताया वेदबोधितत्वात्।

मङ्गलविघ्नध्वंसयोस्तु विशिष्यैव कार्यकारणभावः, तथाच स्वरूपसम्बन्धेन विघ्नध्वंसं प्रति स्वजन्यापूर्ववत्त्वसम्बन्धेन मङ्गलं कारणमिति।

मङ्गलाव्यवहितोत्तरजायमानविघ्नध्वंसत्वावच्छिन्नं प्रति मङ्गलं कारणं, एवं विनायकस्तवपाठाव्यवहितोत्तरजायमानविघ्नध्वंसत्वावच्छिन्नं प्रति विनायकस्तवपाठः कारणमित्यादिरीत्या विशेषकार्यकारणभावः मङ्गलमित्यादिग्रन्थेन सूचितः। तेन न व्यतिरेकव्यभिचारः।

नास्तिकग्रन्थे समाप्तिदर्शनात् कुतश्चित् विघ्नध्वंसस्य स्वतःसिद्धविघ्नात्यन्ताभावस्य वा कल्पनेन व्यतिरेकव्यभिचारवारणम्। एवं कादम्बर्यादौ समाप्त्यदर्शनेन मङ्गलापेक्षयाऽधिकस्य महतो वा विघ्नस्य कल्पनयाऽन्वयव्यभिचाराभाव इति बोध्यम्।

५. प्रश्नः—क्वचिद् विघ्नात्यन्ताभाव एव समाप्तिसाधनमित्यादिग्रन्थोत्थितौ किं बीजम्? प्रतिबन्धकसंसर्गाभावस्यैव च कार्यजनकत्वकथने कोऽभिप्रायः?

उत्तरम्—अथ स्वतःसिद्धविघ्नात्यन्ताभावस्थले विघ्नध्वंसाभावेऽपि समाप्ति-सत्त्वेन व्यतिरेकव्यभिचारात् तस्य समाप्तिसाधनता न स्यादिति चेन्न, क्वचिद् विघ्नध्वंसेन क्वचिच्चे विघ्नात्यन्ताभावेन समाप्तिर्भवतीति स्वीकारात्। नचैवम-ननुगमः, विघ्नप्रतियोगिकसंसर्गाभावत्वेन हेतुतास्वीकारात्।

कार्यमात्रं प्रति प्रतिबन्धकसंसर्गाभावस्य सामान्यतः कारणत्वं सिद्धमेवेति न पृथक् सामान्यतः कार्यकारणभावकल्पना अस्माकं विघ्नसंसर्गाभावस्यैवेत्यादि-ग्रन्थाभिप्राय इति बोध्यम्।

६. प्रश्नः—यथा घटादिकार्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपीति विश्वनाथः। अत्र पृच्छ्यते-श्रुतिप्रमाणसत्त्वे अनुमानप्रमाणोपन्यासस्य किं प्रयोजनम्? कीदृशानुमानेन कथमीश्वरः सिद्ध्यति? अङ्कुरपद-मादिपदञ्च कथमुपात्तम्? किमत्र पक्षतावच्छेदकम्? कः प्रकृते व्य-भिचारशङ्कानिवर्त्तकस्तर्कः? कथमत्र सत्प्रतिपक्षः? कथं च तन्निरासः?

उत्तरम्—अथाप्रत्यक्षेऽपीश्वरे श्रुतिप्रमाणसत्त्वे किमर्थमनुमानोपन्यास इति चेन्न, श्रुतीनामीश्वरोक्तत्वेन प्रामाण्यस्य वाच्यतया तत्र सन्देहे वेदप्रामाण्यस्यापि सन्दिग्धत्वात्, श्रुत्यपेक्षयाऽनुमानप्रमाणस्वीकर्तृणामाधिक्याच्च।

क्षितिः कर्तृजन्या कार्यत्वात् घटवदित्यनुमानेन क्षितौ कर्तृजन्यत्वे सिद्धे तत्क-र्तृत्वस्य तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वरूपस्यास्मदादिष्वसंभवात् तत्कर्तृतयेश्वरः सिद्ध्यति।

ननु क्षितित्वावच्छेदेन कर्तृजन्यत्वसाधने परमाणौ बाधात् तत्सामानाधिकरण्येन तत्साधने घटादौ सिद्धसाधनात् तदनुमानानुपपत्तिरिति चेन्न, अङ्कुरस्य पक्षतया विवक्षणात्। आदिपदञ्च मेघादिपक्षकानुमानसूचनायैव।

वस्तुतोऽत्र जन्यं कर्तृजन्यं कार्यत्वात् घटवदिति ग्रन्थकृदभिमतानुमानेनेश्वर-सिद्धिः। न चैव पक्षतावच्छेदहेत्वोरैक्यप्रसङ्गः, स्वरूपसम्बन्धविशेषरूपकार्यत्वस्यैव पक्षतावच्छेदकतया, प्रागभावप्रतियोगित्वरूपकार्यत्वस्यैव हेतुतया च विवक्षणेन तयोरैक्याभावात्।

अत्र कार्यत्वं कर्तृजन्यत्वव्यभिचारि न वेति व्यभिचारशङ्का निवर्त्तकतर्कस्तु कार्यत्वं यदि कर्तृजन्यत्वव्यभिचारि स्यात्तर्हि कर्तृजन्यतावच्छेदकं न स्यादित्येव।

नच क्षित्यादिकर्त्रजन्यं शरीराजन्यत्वादाकाशवदित्यनुमानेनात्र सत्प्रतिपक्षापत्तिरिति वाच्यम्, शरीराजन्यत्वं कर्त्रजन्यत्वव्यभिचारि न वेति व्यभिचारशङ्कानिवर्त्तकतर्कस्यात्राभावादिति दिक्।

७. प्रश्नः—शक्तेः सप्तपदार्थातिरिक्तपदार्थतेति कया युक्त्या कस्य मतम्? कथं तन्निराकरणम्? क्व च न्यायनये तस्या अन्तर्भावः?

उत्तरम्—अथ वह्निसत्त्वेऽपि प्रतिबन्धकचन्द्रकान्तमणिसमवधाने दाहो न जायते, प्रतिबन्धकापसारणे उत्तेजकसूर्यकान्तमणिसमवधाने वा दाहो जन्यते, अतः दाहम्प्रति तदनुकूलशक्तिमद्वह्नित्वेन वह्नेः कारणतेति कल्प्यते। तथा च वह्निसत्त्वेपि प्रतिबन्धकसमवधाने शक्तिर्नश्यतीति शक्तिमद्वह्न्यभावादेव दाहो नोत्पद्यते, प्रतिबन्धकापसारणे उत्तेजकसमवधाने वा शक्तिरुत्पद्यत इति दाह उपपद्यते। सा शक्तिर्न जातिमदात्मिका गुणवृत्तित्वात्, नापि जातिहीनरूपा उत्पत्तिमत्त्वे सति विनाशित्वादिति शक्तेः सप्तपदार्थातिरिक्तपदार्थत्वात् न सप्तैव पदार्था इति मीमांसकमतम्।

वस्तुतस्तु शक्तिरतिरिक्तपदार्थ इति मीमांसकमतं न समीचीनम्, कार्यम्प्रति प्रतिबन्धकाभावस्य कारणताऽङ्गीकारेण दाहम्प्रति उत्तेजकाभावविशिष्टमण्यभावोऽपि कारणमिति कल्प्यते। तथा च वह्निसत्त्वेऽपि उत्तेजकाभावविशिष्टमणिसमवधाने प्रतिबन्धकाभावरूपकारणाभावादेव दाहाभावस्य, चन्द्रकान्तमण्यसमवधाने उत्तेजकसमवधाने वा कारणसत्त्वाद् दाहस्य चोपपत्तौ अनन्तशक्तितत्प्रागभावध्वंसकल्पनाऽनौचित्यात् शक्तिकल्पने मानाभावात्।

नन्वेवमपि वह्नौ दाहानुकूलशक्तिरित्यादिप्रतीतिसिद्धः शक्तिपदार्थोऽतिरिक्तोऽवश्यमभ्युपेय इति चेन्न, न्यायनये तादृशप्रतीतिविषयशक्तेः वह्निनिष्ठदाहकारणत्वादावन्तर्भावादिति दिक्।

८. प्रश्नः—सादृश्यं सप्तपदार्थातिरिक्तपदार्थ इति कया युक्त्या कस्य मतम्? कथञ्च तत्खण्डनम्?

उत्तरम्—ननु चन्द्रसदृशं मुखमिति प्रतीत्या सादृश्यपदार्थः सिद्ध्यति। तथा च सादृश्यम् भावानन्तर्भूतं व्यतिरेकित्वे सति सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वादिति तद्, अभावानन्तर्भूतं सत्त्वेन प्रमीयमाणत्वादित्यनुमानाभ्यां सिद्धे सादृश्यस्य क्लृप्तपदार्थानन्तर्भावेण सप्तैव पदार्था इत्ययुक्तमिति मीमांसकमतम्।

तन्न युक्तम्, न्यायनये सादृश्यस्य तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वरूपतया घटसदृशः पट इत्यादौ जातौ, यथा गोत्वं नित्यं तथाऽश्वत्वमपीत्यादौ नित्यत्वादिरूपोपाधौ चान्तर्भावेन सर्वत्र क्लृप्तपदार्थेष्वेव तस्यान्तर्भावादिति दिक्।

९. प्रश्नः—ननु द्रव्यत्वजातौ किं मानमिति शङ्कोत्थाने किं बीजम्? कः द्रव्यत्वजातिसिद्धिप्रकारः? संयोगस्य विभागस्य वेत्यपरपक्षद्वयोल्लेखप्रयोजनञ्च किम्?

उत्तरम्—अथ मूलोक्तद्रव्याणीत्यस्य गुणवन्तीत्यर्थे गुणानां शक्यतावच्छेदकतया गौरवाद् द्रव्यत्वजातिमन्तीत्यर्थे सिद्धे द्रव्यत्वजातेरुपस्थित्या तत्र मानशङ्का।

नन्वननुगताकृतिषु घृतादिषु इदं द्रव्यमिदं द्रव्यमित्याकारकानुगतप्रतीतेरभावेन द्रव्यत्वजातौ प्रत्यक्षप्रमाणासंभवात् किन्तत्र मानमिति चेन्न, गुणे गुणोत्पत्तिवारणाय समवायेन कार्यंप्रति तादात्म्येन द्रव्यं कारणमिति कार्यकारणभावस्वीकारात् समवायसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिता तादात्म्यसम्बन्धावच्छिन्ना कारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् घटत्वावच्छिन्नकार्यतानिरूपितदण्डनिष्ठकारणतावदित्यनुमानेन द्रव्यनिष्ठकारणतायाम् अन्यूनानतिप्रसक्तद्रव्यत्वात्मकधर्मावच्छिन्नत्वसिद्धौ द्रव्यत्वं जातिः जातित्वबाधकरहितत्वे सति अनुवृत्तप्रत्ययहेतुत्वादित्यनुमानेन द्रव्यत्वस्य जातित्वसिद्धेः।

ननु प्रागभावप्रतियोगित्वरूपकार्यत्वस्य ध्वंससाधारण्येनातिप्रसक्ततया समवायसम्बन्धावच्छिन्नकार्यतावच्छेदकत्वासंभवात् द्रव्यत्वरूपधर्मसाधकानुमानासंभव इति चेन्न, समवायेन संयोगं प्रति तादात्म्येन द्रव्यं कारणमिति कार्यकारणभावस्वीकारेण कार्यत्वावच्छिन्नपदस्थाने संयोगत्वावच्छिन्नपदप्रक्षेपेण तदनुमानोपपत्तेः। नचैवमपि विभुद्वयसंयोगस्वीकर्तृमते संयोगत्वस्य नित्यानित्यवृत्तितया कार्यतावच्छेदकत्वासंभवात् तदनुमानमसंभव्येवेति वाच्यम्, समवायेन विभागं प्रति तादात्म्येन द्रव्यं कारणमिति स्वीकारेण संयोगत्वावच्छिन्नपदस्थाने विभागत्वावच्छिन्नपदनिवेशेन तदनुमानोपपत्तेरिति दिक्।

१०. प्रश्नः—तमसो दशमद्रव्यत्वमुपपाद्य निरस्यताम्?

उत्तरम्—ननु तमसः नीलं तमश्चलतीति प्रतीत्या रूपवत्त्वकर्मवत्त्वसिद्धौ तमो द्रव्यं रूपवत्त्वात्कर्मवत्त्वाच्चेत्यनुमानेन द्रव्यत्वे सिद्धे च तमो न पृथिवी गन्धशून्यत्वात्, तमो न जलाद्यन्यतमरूपं नीलरूपवत्त्वादित्यनुमानाभ्यामालोकानपेक्षचाक्षुषज्ञान-

विषयत्वेन च क्लृप्तनवद्रव्येष्वनन्तर्भावाद् दशमं द्रव्यं तमः कुतो नोक्तमिति चेन्न, तमस उष्णस्पर्शवत्त्वप्रतीत्यन्यथानुपपत्तिसिद्धतेजोद्रव्याभावरूपताऽङ्गीकारेणैवोपपत्तौ द्रव्यान्तरकल्पनाया अनुचितत्वात्, तमसोऽतिरिक्तद्रव्यत्वेऽनन्तावयवादिकल्पनागौरवात् रूपवत्त्वकर्मवत्त्वप्रतीत्योर्भ्रमत्वाभ्युपगमेन तमोद्रव्यत्वसाधकहेतोरभावाच्च।

११. प्रश्नः—जातेः सपदकृत्यं लक्षणं किम्? परस्या अपरस्याश्च जातेः लक्षणोदाहरणानि कानि? द्रव्यगुणकर्मभिन्नावृत्तिधर्मत्वस्यैव कुतो न जातिलक्षणता?

उत्तरम्—अथ नित्यत्वे सति अनेकनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तितावत्त्वं जातेः लक्षणम्। तत्र पटादावतिव्याप्तिवारणाय सत्यन्तम्, गगनपरिमाणादावतिव्याप्तिवारणायानेकनिरूपितेति, अत्यन्ताभावेऽतिव्याप्तिवारणाय समवायसम्बन्धावच्छिन्नेति। विभुद्वयसंयोगस्वीकर्तृमते नित्यसंयोगेऽतिव्याप्तिवारणाय संयोगभिन्नत्वे सतीत्यपि लक्षणे निवेश्यम्।

सा जातिः द्विविधा, परापरभेदात्, तत्र परजातिलक्षणम् जातिविशिष्टजातित्वम्, वै० स्वभिन्नत्वस्वव्यापकत्वोभयसंबन्धेन, एवं जातिविशिष्टजातित्वमपरजातिलक्षणम्, वै० स्वभिन्नत्वस्वव्याप्यत्वोभयसंसर्गेण। यथा परं सत्ता, अपरं घटत्वादि। द्रव्यत्वादि तु निरुक्तलक्षणद्वयसत्त्वात् परमपरञ्च।

न च द्रव्यगुणकर्मभिन्नावृत्तिधर्मत्वस्य जातिलक्षणता, तस्य द्रव्यगुणान्यतरत्वादावतिव्याप्तेरिति दिक्।

१२. प्रश्नः—व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः। रूपहानिरसम्बन्धो जातिबाधकसंग्रहः॥ एतदुक्तजातिबाधकानि परिष्कृत्य तदुदाहरणानि निरूप्यन्ताम्?

उत्तरम्—अथ व्यक्तेरभेद इति-अत्र व्यक्तिपदार्थः स्वाश्रयव्यक्तिः, निष्ठत्वं षष्ठ्यर्थः, भेदः स्वाश्रयव्यक्तिनिष्ठव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताको बोध्यः। तथा च स्वाश्रयव्यक्तिनिष्ठः स्वाश्रयव्यक्तिनिष्ठव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकभेदाभावः स्वस्य जातित्वे बाधक इति भावः। यथा आकाशे आकाशं नेत्याकारकतादृशभेदाभावसत्त्वादाकाशत्वं न जातिः।

तुल्यत्वमिति - समनियतत्वसम्बन्धेन जातिविशिष्टत्वं तुल्यत्वं जातित्वे बाधकम्। यथा कलशत्वे घटत्वजातिसमनियतत्वसत्त्वान्न जातित्वम्।

सङ्कर इति—जातित्वनिर्णायकप्रमाणाभावसहकृतः परस्परात्यन्ताभावसमानाधिकरणधर्मयोरेकत्र समावेशः सङ्करः जातित्वे बाधकः। यथा मूर्तत्वाभाववत्याकाशे भूतत्वं, भूतत्वाभाववति मनसि मूर्त्तत्वम्, उभयोः पृथिव्यादिचतुष्टये समावेश इति भूतत्वमूर्त्तत्वोभयं भूतत्वं वा न जातिः।

अनवस्थितिरिति—अप्रामाणिकानन्तपदार्थकल्पनाया अविश्रान्तिरनवस्थितिः जातित्वस्य जातित्वबाधिका। तथाहि-यदि घटत्वादिवृत्तिजातित्वं जातिः, तदा घटत्वादितद्वृत्तिजातित्वोभयवृत्तिजातित्वमपि जातिः, एवन्तस्य जातित्वे घटत्वादितद्वृत्तिजातित्वतादृशोभयवृत्तिजातित्वैतत्त्रितयवृत्तिजातित्वमपि जातिरित्यादिरीत्याऽनवस्थायां सत्यां घटत्वादिवृत्तिजातित्वं न जातिः।

रूपहानिरिति—स्वतोऽव्यावर्त्तकत्वव्याघातो रूपहानिः विशेषत्वस्य जातित्वं बाधते तथाहि—परमाणुनिष्ठपरमाण्वन्तरभेदसाधकत्वं विशेषस्य तद्व्यक्तित्वेनैव, तद्व्यक्तित्वन्तु तादात्म्येन सैव व्यक्तिः। विशेषत्वस्य जातित्वे तु तेनैव रूपेण हेतुता वाच्या, जातिमन्निष्ठव्यावर्त्तकताया जात्यवच्छिन्नत्वनियमात्, तथा च व्यभिचार इति विशेषत्वं न जातिः।

असम्बन्ध इति—समवेतवृत्त्यनुयोगितासम्बन्धावच्छिन्नप्रतियोगिताकसमवायाभावोऽसम्बन्धः समवायत्वाभावत्वयोर्जातित्वबाधकः। तथा हि—समवायत्वाभावत्वयोरसमवेतत्वात् तादृशसम्बन्धावच्छिन्नप्रतियोगिताकसमवायाभावस्य सत्त्वात् समवायत्वमभावत्वञ्च न जातिरिति दिक्।

१७. प्रश्नः—विशेषपदार्थस्य निर्दुष्टं लक्षण किम्? तदङ्गीकारे का युक्तिः? तत्र कीदृशं स्वतोऽव्यावृत्तत्वम्? नवीनमते च तस्यावश्यकता न वा?

उत्तरम्—अथ स्वतोव्यावृत्तत्वम् विशेषस्य लक्षणम्, ननु विशेषसद्भावे का युक्तिरिति चेन्न, अयं घटस्तस्माद् घटाद् भिन्नो भिन्नावयवारब्धत्वादित्यादिक्रमेण भिन्नावयवारब्धत्वहेतुना घटादीनां द्व्यणुकान्तानां परस्परं भेदसाधनेऽपि निरवयवपरमाणूनां तत्साधनाय विशेषपदार्थाभ्युपगमात्। तथा च अयं परमाणुस्तस्मात्परमाणोर्भिन्नस्तद्विशेषादित्यनुमानेन तेषां परस्परं भेदः सिद्ध्यति, अन्यथा परमाणूनां तदसिद्धौ द्व्यणुकादीनामपि परस्परं भेदासिद्ध्या घटादीनामपि तदसिद्धिप्रसङ्गः।

स च विशेषः स्वत एव व्यावृत्तः, तथा च अयं विशेषस्तस्माद्विशेषाद् भिन्नः स्वस्भादित्याद्यनुमानेन विशेषाणामपि परस्परं भेदसिद्धौ तदर्थं विशेषान्तरापेक्षा नास्तीति नानवस्था। तत्र स्वतोऽव्यावृत्तत्वञ्च स्वप्रयोज्यस्वनिष्ठस्वसजातीयप्रतियोगिकभेदकत्वम्।

नव्यमते विशेषाणां विशेषान्तरमन्तरा स्वतोऽव्यावृत्तत्ववन्नित्यद्रव्याणामपि तत्संभवाद्विशेषस्यावश्यकता नास्तीति बोध्यम्।

१४. प्रश्नः—समवायसाधनप्रकारमुपपाद्य तस्य विलक्षणसम्बन्धत्वे किं मानम्? किञ्च तस्य निर्दुष्टं सपदकृत्यं लक्षणम्? एवं समवायस्यैकतया वाय्वादौ रूपादिप्रसाऽऽपत्तिः कुतो न? तथा अभावस्य वैशिष्ट्यं सम्बन्धान्तरं कुतो न? इति समुपपाद्यताम्?

उत्तरम्—अथ सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य कारणतेति वैशेषिकस्य एकसमवायाश्रयानन्तव्यक्तीनामेकदा प्रत्यक्षासम्भवेन समवायस्याप्रत्यक्षतया रूपी घट इत्यादिविशिष्टबुद्धिः विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात् दण्डी पुरुष इति विशिष्टबुद्धिवदित्यनुमानेन युतसिद्धद्रव्ययोरेव संयोग इति नियमेन संयोगबाधात् साध्यघटकतया लाघवज्ञानसहकारादेकः समवायः सिद्धयति। नच स्वरूपसम्बन्धमादाय तदनुमानोपपत्तौ कथं समवायात्मकविलक्षणसम्बन्धकल्पनमिति वाच्यम्, क्लृप्तानन्तस्वरूपाणां तेन सम्बन्धत्वकल्पने गौरवात्।

तथा च नित्यत्वे सति सम्बन्धप्रतियोग्यनुयोगिभिन्नत्वे सति सम्बन्धत्वं समवायस्य लक्षणम्। तत्र क्रमशः संयोगे, महाकालाद्यात्मकस्वरूपसम्बन्धे, परमाण्वादौ चातिव्याप्तिवारणाय दलानि।

ननु समवायस्यैकत्वे वायौ रूपसमवायस्यापि सत्त्वेन सम्बन्धसत्त्वं सम्बन्धिसत्त्वव्याप्यमिति नियमाद् रूपस्यापि सत्त्वसम्भवाद् वायू रूपवानिति प्रमात्मकप्रतीतिः स्यादिति चेन्न, रूपप्रतियोगिकत्वविशिष्टसमवायत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणताया एव रूपसम्बन्धतया तस्या वायावभावात्।

न च समवायवत् घटाभाववद्भूतलमिति प्रतीत्या अभावस्यापि वैशिष्ट्यं सम्बन्धान्तरं सिद्धयेदिति वाच्यम्, वैशिष्ट्यस्यानित्यत्वे-ऽनन्तवैशिष्ट्यानां सम्बन्धत्वकल्पने गौरवात्, नित्यत्वे च घटाभाववति भूतले घटानयनानन्तरमपि नित्यघटाभावस्यापि सत्त्वेन घटाभाववद्भूतलमिति बुद्धेः प्रमात्वापत्तेः। नचाभावस्य

"प्रतियोग्यनुयोगिरूप" स्वरूपसम्बन्धपक्षेऽपि तदानीं घटाभावरूपप्रतियोगिनो भूतलरूपानुयोगिनश्च सत्त्वेन घटाभावसम्बन्धस्यापि सत्त्वात् तादृशबुद्धेः प्रमात्वं स्यादेवेति वाच्यम्, घटाभाववद्भूतलमिति प्रमाकालीनतत्तद्भूतलादेरेव तत्तदभावसम्बन्धतया तदानीं तत्कालीनतद्भूतलरूपस्वरूपसम्बन्धाभावेनादोषादिति दिक्।

१५. प्रश्नः—अभावानामधिकरणात्मकत्वं निरस्यताम्?

उत्तरम्—नन्वभावानां भावातिरिक्तपदार्थत्वकल्पनापेक्षया क्लृप्तभावपदार्थरूपाधिकरणात्मकत्वमेवास्त्विति चेन्न, तथा सत्यभावाधिकरणयोरभेदेनाधाराधेयभावानुपपत्तेः। नचाभावाधिकरणकाभावस्याधिकरणात्मकत्वेऽप्याधाराधेयभावोपपत्तिवदभावानां भावाधिकरणरूपत्वेऽपि तदुपपत्त्या न दोष इति वाच्यम्, तथा सति वाय्वादिनिष्ठरूपाद्यभावानां चक्षुरिन्द्रियाग्राह्यवाय्वादिरूपतयाऽप्रत्यक्षत्वापत्तेः तेषामनन्ताधिकरणात्मकत्वकल्पनापेक्षया भावातिरिक्तपदार्थत्वकल्पनायामेव लाघवाच्चेति बोध्यम्।

१६. प्रश्नः—द्रव्यादिपञ्चानामनेकत्वं समवायित्वञ्च साधर्म्यमवादि तथा गुणादेः गुणशून्यत्वं क्रियारहितत्वञ्च साधर्म्यमगादि, तत्र सर्वत्र साधर्म्यस्वरूपं तथा प्रतिपाद्यतां यथा क्वापि दोषो न प्रसज्येत?

उत्तरम्—ननु द्रव्यादिपञ्चानामनेकत्वस्य साधर्म्यत्वेऽनेकत्ववत्त्वस्य भावेऽतिव्याप्तिः, अनेकत्वे सति भावत्वस्य तत्त्वे आकाशादावव्याप्तिरिति चेन्न, अनेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वस्य तदर्थत्वात्।

ननु तेषां समवायित्वस्य साधर्म्यस्य सामान्यादावव्याप्तिः, समवायप्रतियोगित्वस्य तदर्थत्वेऽपि नित्यद्रव्येष्वव्याप्तिरिति चेन्न, समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वस्य तदर्थत्वात्।

नच गुणादेः गुणशून्यत्वस्य साधर्म्यस्याद्यक्षणे घटादावतिव्याप्तिः, गुणवद्वृत्तिधर्मवत्त्वस्य तदर्थत्वात्।

नापि तस्य क्रियाशून्यत्वस्य साधर्म्यत्वे गगनादावतिव्याप्तिः, कर्मवद्वृत्तिपदार्थविभाजकोपाधिमत्त्वस्य तदर्थत्वादिति दिक्।

१७. प्रश्नः—अणुपरिमाणस्य कथन्न कारणत्वमिति विशदमुपपाद्य आत्ममहत्परिमाणस्याकारणत्वमित्याचार्याशयं वदतान्तात्पर्यं प्रकाश्य कथञ्च विश्वनाथमते तन्निरास इति समीक्ष्यताम्?

उत्तरम्—ननु स्वाश्रयारब्धघटपरिमाणारम्भककपालपरिमाणवदणुपरिमाणमपि स्वाश्रयजन्यद्व्यणुकत्रसरेणुपरिमाणजनकं स्यादिति तद्भिन्नानां कारणत्वं साधर्म्यमित्यसङ्गतमिति चेन्न, तथा सति परिमाणस्य स्वसजातीयोत्कृष्टपरिमाणजनकत्वनियमान्महदारब्धस्य महत्तरत्ववदणुजन्यस्याणुतरत्वप्रसङ्गेन त्रसरेणोरप्रत्यक्षत्वापत्तेः। नचाणुपरिमाणस्य विषयतया योगिप्रत्यक्षे, ज्ञायमानसामान्यस्य प्रत्यासत्तित्वेन सामान्यलक्षणाजन्यज्ञाने, ज्ञायमानहेतोरनुमितिकरणतयाऽनुमितौ च कारणत्वात् तदसङ्गतमेवेति वाच्यम्, योगजधर्मेणातीतादिविषयके योगिप्रत्यक्षे विषयस्याकारणत्वात्, तद्घटनाशानन्तरं तद्घटवतः स्मरणे सामान्यलक्षणया समेषां तद्घटवतां भानस्यानुपपत्त्या ज्ञायमानसामान्यस्य प्रत्यासत्तित्वानभ्युपगमात्, अतीतादिलिङ्गकानुमित्यनुपपत्त्या ज्ञायमानहेतोरनुमितिकरणत्वानङ्गीकाराच्चेति बोध्यम्।

अथ "कारणत्वं चान्यत्र पारिमाण्डल्यादिभ्यः" इति प्रशस्तपादभाष्यमुपादाय "आदिपदेन परममहत्त्वं गृह्यते" इति किरणावल्यामुक्तेरात्मपरममहत्परिमाणस्यापि न कारणत्वमित्याचार्याशय इत्यन्येषान्तात्पर्यम्. तन्न—

"कारणत्वञ्च ज्ञातृधर्मेतरभावकार्यापेक्षये"ति तदुत्तरग्रन्थेन ज्ञानातिरिक्तं प्रत्येव। परममहत्परिमाणस्याकारणत्वस्याचार्याभिमततया आत्मपरममहत्त्वस्य ज्ञानेऽपि न कारणत्वमित्याचार्याशयस्य दुर्वचत्वात्। तथा चात्ममानसप्रत्यक्षे आत्ममहत्त्वं कारणमेवेति दिक्।

१८. प्रश्नः - "अन्यथासिद्धिशून्यस्य नियता पूर्ववर्त्तिता" इति विश्वनाथः। किमत्र कारणस्य सपदकृत्यं सामान्यलक्षणम्? किञ्चात्र नियतपूर्ववर्त्तित्वम्? नियतपूर्ववर्त्तिभिन्नानामन्यथासिद्धिशून्यत्वदलेनैव वारणसंभवान्नियतपूर्ववर्त्तित्वदलस्य कथन्न व्यर्थता?

उत्तरम्—अथ तत्कार्यनिरूपितान्यथासिद्धत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वे सति तत्कार्यनिरूपितनियतपूर्ववर्त्तितावत्त्वं तत्कार्यनिरूपितकारणत्वम्। रासभादौ घटादिकारणताया वारणाय सत्यन्तम्, तन्त्वादौ च तस्या वारणाय विशेष्यदलम्।

तत्र लघुनियतपूर्ववृत्तितावच्छेदकधर्मवत्त्वं नियतपूर्ववर्त्तित्वम्, तेन वनस्थदण्डादावपि घटस्वरूपयोग्यतोपपत्तिः।

ननु तादृशनियतपूर्ववर्त्तिभिन्नानामनन्यथासिद्धत्वदलेनैव वारणान्नियतपूर्ववर्त्तित्वदलं व्यर्थमिति चेन्न, स्वं प्रति यत् लघुनियतपूर्ववर्त्ति तद्भिन्नस्य स्वम्प्रत्यन्यथासिद्धत्वे तन्तोरपि घटं प्रत्यन्यथासिद्धत्वापत्त्या स्वं प्रति यत् लघुनियतपूर्ववर्त्ति तद्भिन्नं यन्नियतपूर्ववर्त्ति स्वम्प्रति तदन्यथासिद्धमिति विवक्षिते तत्कार्यनिरूपितान्यथासिद्धत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वमात्रस्य तत्कार्यम्प्रति कारणत्वे तन्तौ प्रसज्यमानाया घटकारणताया वारणाय कारणशरीरेऽपि नियतपूर्ववर्त्तित्वदलस्यावश्यकत्वादिति ध्येयम् ॥

१६. प्रश्नः—के कारणावान्तरभेदाः ? कानि च तेषां सपदकृत्यानि सोदाहरणनि लक्षणानि ? घटादिनिमित्तकारणदण्डादेः स्वनिष्ठरूपादिसमवायिकारणत्वेन सामान्यतः समवाय्यसमवायिकारणभिन्नस्य निमित्तकारणत्वस्य वक्तुमशक्यत्वेन विशेषतस्तत्तत्समवाय्यसमवायिकारणभिन्नस्यैव तत्त्वस्य वक्तव्यत्वे ध्वंसस्य निमित्तकारणं कीदृशं वाच्यम् ? आत्मविशेषगुणानां च कथमसमवायिकारणत्वं नास्ति ?

उत्तरम्—अथ समवायिकारणा समवायिकारणनिमित्तकारणानि कारणावान्तरभेदाः ।

तत्र स्वकारणतावच्छेदकयद्धर्मावच्छिन्ने यद्धर्मावच्छिन्नकार्यं समवायसम्बन्धेनोत्पद्यते तद्धर्मावच्छिन्नकार्यं प्रति तद्धर्मावच्छिन्नं समवायिकारणम् । तत्र द्रव्यत्वादेः घटादिसमवायिकारणतावच्छेदकत्ववारणाय स्वकारणतावच्छेदकेति । यथा घटादेः कपालादि ।

समवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धेन कार्यसमवायिकारणप्रत्यासन्नत्वे सति ज्ञानादिभिन्नत्वे सति कारणत्वमसमवायिकारणत्वम् । यथा कपालद्वयसंयोगः घटस्य, कपालरूपञ्च घटरूपस्य । निरुक्तासमवायिकारणद्वयसंग्रहायान्यतरसम्बन्धेनेति घटरूपासमवायिकारणत्वस्य घटे वारणायाद्यं सत्यन्तम् । आत्मविशेषगुणेऽतिव्याप्तिवारणायान्त्यं सत्यन्तम् । उदासीनगुणेऽतिव्याप्तिवारणाय विशेष्यदलम् ।

स्वसमवायिकारणस्वासमवायिकारणभिन्नत्वे सति स्वकारणत्वं स्वनिमित्तकारणत्वम् । यथा दण्डो घटस्य ।

न चैवं ध्वंसनिमित्तकारणेऽव्याप्तिरिति वाच्यम्, समवायिकारणतात्व—अस-

मवायिकारणतात्वान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्स्वकारणतावत्त्वस्य स्वनिमित्तकारणत्वाभ्युपगमात् ।

नन्वात्मविशेषगुणानामप्यसमवायिकारणत्वं भवत्विति चेन्न, नीलतन्तुभ्यो रक्तपटोत्पत्तिवारणाय विशेषगुणानां स्वसजातीयविशेषगुणासमवायिकारणकत्वनियमाभ्युपगमेन ज्ञानादीनामिच्छादिकं प्रति साजात्याभावेनासमवायिकारणत्वासंभवात् । साजात्यमत्र स्ववृत्तियावज्जातिमत्त्वेनेति बोध्यम् ।

२० प्रश्नः—अन्यथासिद्धभेदाः कति ? तेषां लक्षणानि उदाहरणानि च कानि ? तृतीयचतुर्थान्यथासिद्धयोरन्यं प्रति पूर्ववृत्तिविशेषणस्य तुल्यतया कथन्नाभेदः ?

उत्तरम्—अथ पञ्चान्यथासिद्धाः । तत्र स्वकारणतावच्छेदको, धर्मः स्वम्प्रत्यन्यथासिद्धः । यथा घटं प्रति दण्डत्वम् ।

स्वकारणसमवेतं जन्यं स्वम्प्रत्यन्यथासिद्धम् यथा घटं प्रति दण्डरूपम् ।

अन्यजनकत्वेन यत् स्वजनकं तत् तेन रूपेण स्वम्प्रत्यन्यथासिद्धम् । यथा घटम्प्रति गगनं शब्दजनकत्वेन हेतुत्वे ।

स्वकारणनिष्ठकार्यतानिरूपितकारणतावच्छेदकरूपेण यत् स्वजनकत्वेन विवक्षितं तत् तेन रूपेण स्वम्प्रत्यन्यथासिद्धम् । यथा घटम्प्रति कुलालपिता, तस्य कुलालपितृत्वेन जनकत्वेन विवक्षणे ।

स्वं प्रति यत् लघुनियतपूर्ववृत्ति तद्भिन्नं यत् नियतपूर्ववर्त्ति स्वम्प्रत्यन्यथासिद्धम् । अत्र घटं प्रति तन्तोरन्यथासिद्धत्ववारणाय द्वितीयनियतपूर्ववर्त्तिदलम् । यथा घटं प्रति रासभः । इति क्रमशः पञ्चान्यथासिद्धाः, तदुदाहरणानि च बोध्यानि । न चैवं तृतीयचतुर्थान्यथासिद्धयोरन्यं प्रति पूर्ववृत्तित्वविशेषणस्य तुल्यतयाऽभेदापत्तिरिति वाच्यम्, तृतीये अन्यपदेन प्रकृतकार्याजनकस्य, चतुर्थे स्वकारणपदेन प्रकृतकार्यजनकस्य ग्रहणादिति दिक् ।

२१. प्रश्नः—केषां कीदृशं मूर्त्तत्वं भूतत्वञ्च साधर्म्यमिति तथा विविच्यताम्, यथा क्वापि दोषो न प्रसज्येत । परिष्कृतमूर्त्तत्वभूतत्वघटकपदव्यावृत्तिश्च लिख्यताम् ?

उत्तरम् अथ पृथिवीजलतेजोवायुमनसामपकृष्टपरिमाणवत्त्वात्मकं मूर्त्तत्वं साधर्म्यम् । नापि परमाणुपरिमाणस्यापकृष्टत्वाभावात्तत्राव्याप्तिः, परममहत्परिमा-

णभिन्नपरिमाणवत्त्वस्य तदर्थत्वात्। न चैवमप्याद्यक्षणे घटादावव्याप्तिः, अविभु-वृत्तिपरिमाणसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य तत्फलितार्थत्वात्। तत्राका-शादावतिव्याप्तिवारणाय समानाधिकरणान्तम्। सत्तामादाय तत्रैव दोषवारणाय द्रव्यत्वव्याप्येति। आकाशपृथिव्यन्यतरत्वमादाय तत्रैव दोषवारणाय जातीति। जातिमत्त्वञ्च समवायेन बोध्यम्।

अथ पृथिवीजलतेजोवाय्वाकाशानां बहिरिन्द्रियजन्यलौकिकसन्निकर्षप्रयोज्य-ज्ञानविषयगुणत्वन्यूनवृत्तिजातिमद्विशेषगुणवत्त्वरूपं भूतत्वं साधर्म्यम्। तत्र सुख-मादायात्मन्यतिव्याप्तिवारणाय बहिःपदम्। ज्ञातो घट इति प्रत्यक्षे स्वसंयुक्त-मनःसंयुक्तात्मसमवेतज्ञानविषयत्वरूपज्ञानलक्षणासन्निकर्षेण ज्ञानस्यापि चाक्षुषत्वा-त्तदादायात्मन्यतिव्याप्तिवारणाय लौकिकेति। परमाण्वादावव्याप्तिवारणाय जाति-मदिति। संयोगमादाय कालादावतिव्याप्तिवारणाय विशेषेति। द्रव्यत्वमादाय तत्रैव दोषवारणाय गुणेतीति दिक्।

२२. प्रश्नः-- अव्याप्यवृत्तित्वं क्षणिकत्वञ्च किम्? अव्याप्यवृत्ति-विशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वं च कथं केषां साधर्म्यम्? योग्य-विभुविशेषगुणनाशम्प्रति कस्य केन सम्बन्धेन कारणता?

उत्तरम्---अथाव्याप्यवृत्तित्वं स्वाभावसामानाधिकरण्यम्। क्षणिकत्वञ्च तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम्।

तथा चाकाशे किञ्चिदवच्छेदे शब्दस्यान्यावच्छेदेन तदभावस्य च सत्त्वात्, शब्दस्य तृतीयक्षणे नाशाच्च, एवमात्मनि शरीरावच्छेदेन ज्ञानस्य घटाद्यवच्छेदेन तदभावस्य च सत्त्वात्, ज्ञानस्य तृतीयक्षणे नाशाच्चाकाशात्मनामव्याप्यवृत्तिविशे-षगुणवत्त्वं क्षणिकविशेषगुणवत्त्वञ्च साधर्म्यम्।

एवं प्रतियोगितासम्बन्धेन योग्यविभुविशेषगुणनाशम्प्रति स्वसामानाधिकरण्य-स्वाव्यवहितपूर्ववृत्तित्वोभयसम्बन्धेन योग्यविभुविशेषगुणः कारणमिति बोध्यम्।

२३ प्रश्नः---चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वस्य तदर्थ-त्वादिति ग्रन्थः केनाशयेनोत्थितः? तद्घटकपदानां व्यावृत्तिश्च का?

उत्तरम्---ननु रूपादीनां कदाचित्तृतीयक्षणेऽपि नाशात् क्षणिकविशेषगुणव-त्त्वस्याकाशात्मसाधर्म्यस्य पृथिव्यादावतिव्याप्तिरिति चेन्न, चतुःक्षणवृत्तिजन्या-वृत्तिजातिमद्विशेषगुणवत्त्वस्य तत्फलितार्थत्वात्।

तत्र चतुर्थक्षणनाशिद्वित्वादिमादाय पृथिव्यादौ दोषवारणाय विशेषेति। क्षणिकरूपवृत्तितद्व्यक्तित्वाश्रयमादाय तत्रैवातिव्याप्तिवारणाय जातीति। त्रिक्षणवृत्त्यपेक्षाबुद्धिवृत्तिज्ञानत्वमादाय लक्षणसमन्वयाय त्रिक्षणवृत्तित्वमपहाय चतुःक्षणवृत्तीति। इच्छात्वमादाय समन्वयविधाने त्रिक्षणवृत्तित्वमेव देयम्। नित्येश्वरेच्छावृत्तीच्छात्वस्य त्रिक्षणवृत्त्यवृत्तित्वासंभव इति जन्यपदम्। शरीरिपदस्य यथाश्रुतार्थत्वे तु द्वेषत्वमादाय तत्समन्वयसंभवेन जन्यपदं न देयमिति दिक्।

२४. प्रश्नः—चाक्षुषलौकिकप्रत्यक्षविषयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वादिति हेतुना कुत्र कीदृशी शङ्का निराकृता? तादृशहेतुघटकचाक्षुषलौकिकपदयोः व्यावृत्तिश्च का?

उत्तरम्—अथ पृथिवीजलतेजसां साधर्म्यस्य प्रत्यक्षविषयत्वस्य परमाण्वादावव्याप्तिरतिव्याप्तिश्च रूपादाविति चेन्न, चाक्षुषलौकिकप्रत्यक्षविषयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्।

तत्रात्मन्यतिव्याप्तिवारणाय चाक्षुषेति। घटो वायुमानिति वाय्वंशे उपनीतभानात्मकघटविशेष्यकचाक्षुषविषयवायुवृत्तिद्रव्यत्वव्याप्यवायुत्वजातिमति वायावतिव्याप्तिवारणाय लौकिकेतीति बोध्यम्।

२५. प्रश्नः—"यद् द्रव्यं यद्द्रव्यध्वंसजन्यन्तत्तदुपादानोपादेय"मिति विश्वनाथः। कथमुत्थितेयं व्याप्तिः? क्व कथं दृष्टान्तता? प्रकृतव्याप्तिघटकपदानां व्यावृत्तिः का? शालग्रामशिलाध्वंसजन्यनारकीयशरीरे व्यभिचारश्च कथं वारणीयः।

उत्तरम्— ननु पृथिवीलक्षणगन्धवत्त्वस्य पाषाणेऽव्याप्तिरिति चेन्न, पाषाणो गन्धवान् पृथिवीत्वादित्यनुमानेन तत्र गन्धसिद्धेः। न च तत्र पृथिवीत्वे किं मानमिति वाच्यम्, पाषाणः पृथिवी गन्धवद्द्रव्यारब्धत्वादित्यनुमानस्य सत्त्वात्। नापि पाषाणावयवा गन्धाभाववन्तः, पाषाणावयवा गन्धवन्तः प्रत्यक्षसिद्धगन्धवत्पाषाणभस्मारम्भकत्वादित्यनुमानेन तत्र गन्धसाधनात्। न च पाषाणभस्मनः पाषाणावयवारब्धत्वमप्रमाणमिति वाच्यम्, पाषाणभस्म पाषाणोपादानोपादेयं पाषाणध्वंसजन्यत्वात् "यद् द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयं यथा महापटध्वंसजन्यखण्डपटः" इत्यनुमानस्य सद्भावात्।

तत्र तादृशखण्डपटस्य महापटोपादानतन्तूपादेयत्वादुदाहरणता।

तथा प्रकृतव्याप्तौ घटध्वंसजन्यरूपध्वंसे व्यभिचारवारणाय प्रथमद्रव्यपदम् । प्राच्यमते दण्डप्रागभावध्वंसजन्यघटे, नव्यमते मिथ्याज्ञानध्वंसजन्यकायव्यूहे व्यभिचारवारणाय द्वितीयद्रव्यपदम् । प्रतिबन्धकद्रव्यात्यन्ताभावजन्यद्रव्ये व्यभिचारवारणाय ध्वंसपदम् । ध्वंसजन्यत्वमत्रादृष्टद्वारा विवक्षितम्, तेन शालग्रामशिलाध्वंसजन्यनारकीयशरीरे न व्यभिचार इति दिक् ।

२६. प्रश्नः—अवयविनमनभ्युपगच्छतां मतमुपपाद्य निरस्य च निजमतेनावयविसाधनप्रकारः समुपपाद्यताम् ।

उत्तरम्—ननु घटादीनां विलक्षणसंयोगविशिष्टपरमाणुपुञ्जरूपत्वेऽप्ययं घट इत्यादिप्रतीत्युपपत्त्या व्यर्थोऽवयविकल्पना । न चैवं परमाणूनामतीन्द्रियतया घटादेः प्रत्यक्षानुपपत्तिरिति वाच्यम्, एककेशस्य दूरेऽप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्ववदेकपरमाणोरप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वसंभवादिति चेन्न—

परमाणोरतीन्द्रियतया तत्समूहस्यापि प्रत्यक्षासंभवात् । एकदेशस्य क्वचिद्दूरत्वदोषेणाप्रत्यक्षत्वेऽपि तस्यानतीन्द्रियत्वेन समीपे प्रत्यक्षेण दृष्टान्तवैषम्यात् न चादृश्यद्व्यणुकाद् दृश्यत्रसरेणूत्पत्तिवददृश्यपरमाणुपुञ्जाद् दृश्यपरमाणुपुञ्जोत्पत्त्यभ्युपगमान्न दोष इति वाच्यम्, मन्मते उपादानोपादेयभावेऽपि दृश्यत्वप्रयोजकमहत्त्वोद्भूतरूपादिकारणकूटवत्त्वात् त्रसरेणौ दृश्यत्वस्य, तदभावाद् द्व्यणुकेऽदृश्यत्वस्य चोपपत्तावपि परमाणौ महत्त्वाभावेन त्वन्मते तत्पुञ्जेऽपि दृश्यत्वस्यानुपपत्तेः । एवं घट इत्यादिप्रतीतिविषयताया अनेकपरमाणुषु कल्पने गौरवादवयविकल्पनमेव वरमिति बोध्यम् ।

२७. प्रश्नः—परमाणुसाधनरीतिः का ?

उत्तरम्—अथावयविसिद्धौ तदवयवधाराया अनन्तत्वे मेरुसर्षपयोः महत्त्वेन साम्यापत्तिरिति तस्याः क्वचिदवश्यं वाच्यो विश्रामो यत्र तत्राणुपरिमाणतारतम्यस्य विश्रान्तत्वात्परमाणुत्वं, तस्यानित्यत्वेऽसमवेतभावकार्योत्पत्तिप्रसङ्गान्नित्यत्वञ्च सिद्धयति । न च त्रसरेणावेव विश्रामो भवत्विति वाच्यम्, त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वाद् घटवदित्यनुमानेन तदवयवसिद्धेः । नच द्व्यणुक एव विश्रामः संभवतीति वाच्यम् । द्व्यणुकः सावयवः महदारम्भकत्वात् कपालवदित्यनुमानेन तदवयवस्यापि सिद्धेः । न चैवं तदवयवधाराऽपि, अनवस्थापातादिति दिक् ।

२८. प्रश्नः—मानवशरीरस्य पार्थिवत्वमेव कथम् ? सति पार्थिवत्व-

मात्रे तत्र कथं पाञ्चभौतिकत्वव्यवहारः ? शरीरत्वं जातिर्न वा ? नो चेत् कथम् ? शरीरलक्षणं सपदकृत्यं किम् ? तत्राथवा कल्पद्वयं कीदृशं कथञ्च ? नृसिंहशरीरे कथं लक्षणसमन्वयः ? वृक्षादीनां च शरीरत्वे किं मानम् ?

उत्तरम्—अथ मानवशरीरं पार्थिवं गन्धवत्त्वादित्यनुमानेन मानवशरीरे पार्थिवत्वं सिद्ध्यति । नच स्वेदौष्ण्यादिना जलीयत्वतैजसत्वाद्यपि तत्र सिद्ध्येदिति वाच्यम्, तथा सति पृथिवीत्वजलत्वादीनां साङ्कर्यप्रसङ्गात् । नच तर्हि जलीयत्वाद्येव तत्रास्तु नतु पार्थिवत्वमिति वाच्यम्, स्वेदादीनां विनाशेऽपि शरीरत्वेन प्रत्यभिज्ञानात् । नचैवं कथं मानवशरीरे पाञ्चभौतिकत्वव्यवहारः, तत्र जलादिचतुष्टयस्य निमित्तकारणत्वादिति बोध्यम् । अथ शरीत्वं न जातिः, पृथिवीत्वादिना साङ्कर्यप्रसङ्गात् ।

तथा च अन्त्यावयवित्वे सति चेष्टाश्रयत्वं शरीरस्य लक्षणम् । तत्र हस्तादावतिव्याप्तिवारणाय सत्यन्तम्, घटादावतिव्याप्तिवारणाय च विशेष्यदलम् ।

नचैवं मरणानन्तरं तत्र खण्डशरीरान्तरमुत्पन्नं तत्राव्याप्तिरिति वाच्यम्, चेष्टावदन्त्यावयविवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं शरीरत्वमित्यभ्युपगमात् । न चैवमपि तादृशपृथिवीत्वजातिमत्त्वात् घटादावतिव्याप्तिः, अन्त्यावयविमात्रवृत्तिचेष्टावद्वृत्तिजातिमत्त्वं शरीरत्वमिति स्वीकारात् । मानुषत्वादिजातिमादाय लक्षणसमन्वयः ।

न चैकव्यक्तिवृत्तितया नृसिंहत्वस्य, जलीयतैजसशरीरवृत्तितया साङ्कर्याद् देवत्वस्य च जातित्वाभावात् कथं नृसिंहशरीरे लक्षणसमन्वय इति वाच्यम्, कल्पभेदेन नृसिंहशरीरस्य नानात्वात् नृसिंहत्वजात्या लक्षणसमन्वयात् ।

ननु वृक्षादीनां शरीरत्वे किं मानमिति चेन्न, अवयवोपचयापचयानुमितप्राणसम्बन्धस्य मानत्वात् । न च वृद्ध्यादिहेतुवायोः प्राणत्वे मानाभाव इति वाच्यम्, 'गुरुं हुङ्कृत्य तुङ्कृत्य विप्रं निर्जित्य वादतः । श्मशाने जायते वृक्षः कङ्कगृध्रोपसेवितः ॥' इत्याद्यागमस्यैव तत्र मानत्वादिति दिक् ।

२९. प्रश्नः—घ्राणेन्द्रियस्य पार्थिवत्वं संसाध्य तत्साधकहेतुघटकपदव्यावृत्तिरभिधीयताम् ?

उत्तरम्—अथ घ्राणेन्द्रियस्य पार्थिवत्वे किं मानमिति चेन्न, घ्राणेन्द्रियं पार्थिवं द्रव्यत्वे सति रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वात् कुङ्कुमगन्धाभिव्यञ्ज-

कगोघृतवदित्यनुमानस्यैव तत्र मानत्वात्। तत्र घ्राणेन्द्रियसन्निकर्षे व्यभिचारवारणायाद्यसत्यन्तम्।

मनसि व्यभिचारवारणाय द्वितीयसत्यन्तम्। वाय्वादौ च व्यभिचारवारणाय विशेष्यदलम्। नच गोघृतस्य निजरूपव्यञ्जकतया दृष्टान्तासिद्धिः, परकीयरसाव्यञ्जकत्वस्य तदर्थत्वात्। नच नवशरावगन्धव्यञ्जकजले व्यभिचारः, तस्य सक्तुरसाभिव्यञ्जकत्वात्। वायूपनीतसुरभिभागस्य दृष्टान्तत्वे तु परकीयपदं न देयमिति दिक्।

३०. प्रश्नः—जलत्वजातिसाधनरीतिस्तथा प्रतिपाद्यतां यथा परमाणुमादाय दोषो न प्रसज्येत।

उत्तरम्—अथ हिमादिषु पामराणाम् इदं जलमिदं जलमित्यनुगतप्रतीतेरभावेन जलत्वजातौ प्रत्यक्षप्रमाणासंभवात् किन्तत्र मानमिति चेन्न, समवायेन जन्यस्नेहं प्रति तादात्म्येन जन्यजलं कारणमिति कार्यकारणभावसत्त्वात् समवायसम्बन्धावच्छिन्नजन्यस्नेहत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणता किञ्चिद्धर्मावच्छिन्ना कारणत्वादित्यनुमानेन जन्यजलत्वरूपधर्मसिद्धौ समवायेन जन्यजलं प्रति तादात्म्येन जलं कारणमिति कार्यकारणभावात् समवायसम्बन्धावच्छिन्नजन्यजलत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानेन जलत्वात्मकधर्मसिद्धौ जलत्वं जातिः। अनुवृत्तप्रत्ययहेतुत्वे सति जातित्वबाधकरहितत्वादित्यनुमानेन तस्य जातित्वसिद्धिः। तथा च न परमाणुमादाय दोषः। स्नेहत्वजलत्वयोः नित्येऽपि वृत्तितया कार्यतावच्छेदकत्वासंभवादुक्तानुमानद्वये जन्यपदम्। न चाद्यानुमानेनैव जलत्वरूपधर्मसिद्धिः, जलत्वस्य परमाणुवृत्तितया तादृशकारणतावच्छेदकत्वासंभवादिति दिक्।

३१. प्रश्नः—जले शुक्लरूपवत्त्वे माधुर्यरसवत्त्वे च किं मानम्?

उत्तरम्—अथ जले शुक्लरूपवत्त्वे किं मानमिति चेन्न, जले शुक्लरूपप्रत्यक्षसत्त्वात्। न च यमुनाजले नीलिमोपलब्ध्या तत्र नीलरूपवत्त्वमपि स्यादिति वाच्यम्, जले नीलजनकतावच्छेदकपृथिवीत्वजातेरभावात् नीलरूपासंभवेन कालिन्दीजले नीलत्वप्रतीतेराश्रयौपाधिकत्वाभ्युपगमात्। अत एव वियति विक्षिप्ते सर्वत्र जले शौक्ल्योपलब्धिः।

ननु जले माधुर्यरसवत्त्वे न प्रमाणमिति चेन्न, हरीतकीभक्षणोत्तरं जलपाने जल-माधुर्यरसप्रत्यक्षस्य सत्त्वात् । नच हरीतक्यामेव जलोष्मसंयोगान्माधुर्य-रसोत्पत्तिरिति वाच्यम् , कल्पनागौरवात् । न च जम्बीररसादावम्लादिप्रतीते-स्तत्राम्लादिमत्त्वमपि स्यादिति वाच्यम्, जले अम्लादिजनकतावच्छेदकपृथिवी-त्वजातेरभावादम्लादिरसासंभवेन जम्बीररसादावम्लाद्युपलब्धेराश्रयौपाधिकत्व-स्वीकारादिति दिक् ।

३२. प्रश्नः—करकादेर्जलत्वसिद्धौ "यद् द्रव्यं यद्द्रव्यध्वंसजन्यमि" त्यादिव्याप्तेः कथमुपयोगिता ?

उत्तरम्—अथ करकादिनाशजन्यद्रव्यान्तरे "यद् द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमि"ति व्याप्त्या करकाद्युपादानोपादेये जलत्वस्य प्रत्यक्षतया जलोपादानोपादेयकरकादावपि जलत्वं सिद्ध्यति । न चैवं करकादौ पार्थिव-त्वाभावे कथन्तत्र काठिन्यप्रतीतिरिति वाच्यम् , तत्रादृष्टविशेषेण द्रवत्वप्रति-रोधाज्जायमानकाठिन्यप्रत्ययस्य भ्रमत्वाभ्युपगमादिति बोध्यम् ॥

३३. प्रश्नः—हेतुघटकपदोपादानफलमुपपादयता चक्षुषस्तैजसत्वं प्रसाध्य प्रभाया दृष्टान्तत्वपक्षे द्वितीयपरकीयपदप्रयोजनमभिधीयताम्॥

उत्तरम्—अथ चक्षुस्तैजसं द्रव्यत्वे सति परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदीपवदित्यनुमानेन चक्षुषस्तैजसत्वं सिद्ध्यति । तत्र प्रदीपस्य स्वस्पर्शव्यञ्जकत्वाद् दृष्टान्तासिद्धिवारणायाद्यं परकीयेति । स्वीयरूप-व्यञ्जकघटादौ व्यभिचारवारणाय द्वितीयपरकीयपदम् । स्पर्शाद्यव्यञ्जकप्रभाया दृष्टान्तत्वे तु प्रथमं परकीयेति न देयम् । द्वितीयपरकीयपदन्तु स्पर्शाद्यव्यञ्ज-करूपव्यञ्जकपार्थिवत्रसरेणौ व्यभिचारवारणाय देयमेव । चक्षुःसन्निकर्षे व्यभि-चारवारणायाद्यं सत्यन्तम् । मनसि व्यभिचारवारणाय द्वितीयसत्यन्तम् । वाय्वादौ च व्यभिचारवारणाय विशेष्यदलमिति दिक् ॥

३४. प्रश्नः—पीतिमाश्रयस्याद्रुतत्वपक्षे द्रुतत्वकल्पे च सुवर्णस्य तैजसत्वं प्रसाध्य तत्साधकहेतुघटकपदव्यावृत्तिः का ? कथं नाप्रयोज-कता ? किञ्चाद्ये पक्षतावच्छेदकम् ? इति समीक्ष्यताम् ।

उत्तरम्—अथ पीतिमाश्रयस्याद्रुतत्वपक्षे—सुवर्णं तैजसम् प्रतिबन्धकेऽ-सति, अत्यन्तानलसंयोगेऽपि सति, अनुच्छिद्यमाननैमित्तिकद्रवत्वाधिकरणत्वात्, यन्नैवं तन्नैवं यथा पृथिवीत्यनुमानेन सुवर्णस्य तैजसत्वं सिद्ध्यति । तत्र जल-

मध्यस्थघृतादौ व्यभिचारवारणायासत्यन्तम् । अग्न्यसमवधाने कथञ्चिदग्निसंयोगे चानुच्छिद्यमानद्रवत्ववति घृतादौ व्यभिचारवारणाय सत्यन्तमत्यन्तपदञ्च । अत्र सुवर्णपदवाच्यत्वस्य पक्षतावच्छेदकतया न दोषः । नचाप्रयोजकता, पृथिवीद्रवत्वस्याग्निसंयोगनाश्यत्वात् ।

पीतिमाश्रयस्य द्रुतत्वकल्पे तु—पीतिमाश्रयो विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः अत्यन्ताग्निसंयोगे सत्यपि पूर्वरूपविजातीयरूपानधिकरणपृथिवीत्वात् जलमध्यस्थपीतपटवदित्यनुमानेन सिद्धस्य पीतिमाश्रयरूपपरावृत्तिप्रतिबन्धकद्रव्यस्य सुवर्णपदवाच्यस्य पक्षसजातीयत्वात् पृथिवीत्वस्य, सांसिद्धिकद्रवत्वाभावात् जलत्वस्य, रूपवत्त्वाद् वायुत्वादेश्चासंभवात् तेजस्त्वसिद्धिः । तत्राग्निसंयोगरहिते कथञ्चिदग्निसंयुक्ते च पूर्वरूपविजातीयरूपानाधारे घटे व्यभिचारवारणाय सत्यन्तमत्यन्तपदञ्च । जलपरमाणौ व्यभिचारवारणाय पृथिवीत्वपदम् । नचाप्रयोजकता, विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंबन्धाभावे पार्थिवाग्निसंयोगस्य पूर्वरूपविजातीयरूपजनकत्वादिति दिक् ।

३५. प्रश्नः—वायौ प्रत्यक्षप्रमाणं संभवति न वा? संभवति चेत् कथम्? न संभवति चेत्कथम्? आद्ये तत्साधकानुमानावश्यकता का? स्पर्शशब्दधृतिकम्पैः लिङ्गैः वायोरनुमानप्रणाली च कीदृशी?

उत्तरम्—अथ नव्यमते स्पार्शनप्रत्यक्षे स्पर्शस्य कारणतया स्पर्शवत्त्वात् वायोः प्रत्यक्षं संभवति । एतत्पक्षे वायुसाधकानुमानमनावश्यकं, तत्सत्त्वदृढीकरणफलकं वा ।

प्राच्यमते बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे उद्भूतरूपस्य कारणतया वायोः रूपवत्त्वाभावात् प्रत्यक्षं न संभवति । तर्हि तत्र किं मानमिति चेन्न, विलक्षणस्पर्शशब्दधृतिकम्पसम्पादकतया वायोरनुमानात् । तथाहि तत्प्रणाली—योऽयं रूपवद्द्रव्यासमवेतः स्पर्शः स क्वचिदाश्रितः स्पर्शत्वात् पृथिवीसमवेतस्पर्शवत्, असति रूपवद्द्रव्याभिघाते योऽयं पर्णादिषु शब्दसन्तानः स स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः अविभज्यमानावयवद्रव्यसम्बन्धिशब्दसन्तानत्वात् दण्डाभिहतभेरीशब्दसन्तानवत्, नभसि तूलमेघविमानादीनां धृतिः स्पर्शवद्वेगवद्द्रव्यसंयोगहेतुका अस्मदाद्यनधिष्ठितद्रव्यधृतित्वात् नौकाधृतिवत्, रूपवद्द्रव्याभिघातं विना तृणे कर्म स्पर्शवद्वेगवद्द्रव्याभिघातजन्यं विजातीयकर्मत्वात् नदपराहतकाशादिकर्मवदितीति दिक् ॥

३६. प्रश्नः—विशेषणासिद्धिविशेष्यासिद्धिनिराकरणपूर्वकं गगनसाधकानुमानं समुपपाद्यताम्।

उत्तरम्—अथ शब्दः अष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वादित्यनुमानेन गगनात्मकं नवमद्रव्यं सिद्धयति। नात्र विशेषणासिद्धिः, शब्दो न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावे सति अकारणगुणपूर्वकत्वे सति प्रत्यक्षत्वात् सुखवत्, शब्दो न दिक्कालमनसां गुणो विशेषगुणत्वाद्रूपवत्, शब्दो नात्मविशेषगुणो बहिरिन्द्रियग्राह्यत्वाद्रूपवदित्यनुमानत्रयेण पक्षेऽष्टद्रव्यानाश्रितत्वसिद्धेः। नचात्र द्वितीयानुमाने स्वरूपासिद्धिः, शब्दो विशेषगुणः चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात् स्पर्शवदित्यनुमानेन शब्दे विशेषगुणत्वसिद्धेः। नाप्याकाशसाधकहेतौ विशेष्यासिद्धिः, शब्दो द्रव्यसमवेतो गुणत्वात् संयोगवदित्यनुमानेन पक्षे द्रव्याश्रितत्वसिद्धेरिति दिक्॥

३७. प्रश्नः—काले मानं किम्? तस्य लक्षणं सपदकृत्यं कीदृशम्? कथञ्च कालस्यैकत्वे क्षणदिनादिव्यवहारः?

उत्तरम्—अथ "इदानीं घटः" इत्यादिप्रतीतिविषयीकृतसूर्यकर्मणः स्वाश्रयसंयोगिसंयोग एव सम्बन्धो घटे वाच्यः, द्रव्ययोरेव संयोग इत्यादि-नियमेन संयोगादिबाधात्। तत्र परस्परं विनिगमनाविरहेणाकाशदिगात्मनां मध्ये कस्यापि ग्रहीतुमशक्यतया तत्सम्बन्धघटकसंयोगिपदग्राह्यतया कालः सिद्धयति। तथा च कालिकसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणतावत्त्वं कालस्य लक्षणम्। तत्र कालिकसम्बन्धावच्छिन्नेतिकरणाद् दिशि, तादात्म्यसम्बन्धावच्छिन्नेतिकरणाच्चेश्वरे नातिव्याप्तिः। एवमेकोऽपि कालः क्रियाद्वारा विभिन्नोपाधिकतया क्षणादिव्यवहारविषयो भवति।

तत्र प्रथमं क्रिया, ततो विभागः, ततः पूर्वसंयोगनाशः, तत उत्तरदेशसंयोगः, ततश्च क्रियानाश इति स्थितिः। तथा च-उपाधिः—स्वजन्यविभागप्रागभावावच्छिन्नं कर्म, पूर्वसंयोगावच्छिन्नविभागो वा, पूर्वसंयोगनाशावच्छिन्नउत्तरसंयोगप्रागभावो वा, उत्तरसंयोगावच्छिन्नं कर्म वा। दिनादिव्यवहारस्तु तत्तत्क्षणकूटैरेव भवतीति बोध्यम्।

३८. प्रश्नः—"महाप्रलये क्षणादिव्यवहारो यद्यस्ति तदाऽनायत्त्या ध्वंसेनोपपादनीयः" इति विश्वनाथः। अत्र महाप्रलयः कः? तत्र क्षण-

व्यवहारस्य किं प्रयोजनम् ? यदिपदेन किं सूचितम् ? महाप्रलयवच्च सृष्टिकालेऽपि ध्वंसेनैव कथं न क्षणादिव्यवहारः ।

उत्तरम्—अथ जन्यभावानधिकरणः कालो महाप्रलयः । तत्र क्षणव्यवहार आवश्यकः, अन्यथा महाप्रलयाधिकरणक्षणाप्रसिद्ध्या महाप्रलयोत्पत्तौ क्षणघटितोत्पत्तिलक्षणस्य तदधिकरणक्षणवृत्तित्वव्याप्यस्ववृत्तिध्वंसप्रतियोगिताकसमयवृत्तित्वरूपस्याव्याप्त्यापत्तेः । तथा क्षणाघटितस्य स्ववृत्तिध्वंसप्रतियोगिकालावृत्तित्वविशिष्टस्ववृत्तित्वरूपस्योत्पत्तिलक्षणत्वे नास्ति तत्र क्षणव्यवहारस्यावश्यकतेत्याशयेनावादि—यदीति । एवं ध्वंसपदलक्षितस्ववृत्तिध्वंसप्रतियोगिकयावद्ध्वंसविशिष्टसमयरूपचरमध्वंसस्यैव तद्व्यक्तित्वेन महाप्रलये क्षणव्यवहारनियामकोपाधितया न तादृशध्वंसमादाय सृष्टिकाले क्षणादिव्यवहारः सम्भवतीति दिक् ॥

३९. प्रश्नः—आत्मत्वजातिसाधनप्रणाली कीदृशी ? सा जातिः जीवेशसाधारणी न वा ? आद्ये परमेश्वरेऽपि कथं न सुखाद्युत्पत्तिः ? द्वितीये च परमात्मनो दशमद्रव्यत्वापत्तिः कुतो न ?

उत्तरम—अथ समवायेन सुखं प्रति तादात्म्येनात्मा कारणमिति कार्यकारणभावस्वीकारात् समवायसम्बन्धावच्छिन्नसुखत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्ना कारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानेनात्मत्वात्मकधर्मसिद्धौ आत्मत्वं जातिः अनुवृत्तप्रत्ययहेतुत्वे सति जातित्वबाधकरहितत्वादित्यनुमानेन तत्र जातित्वं सिद्ध्यति ।

प्राच्यमते सा जातिः जीवेशसाधारणी, न चैवं परमात्मनि सुखोत्पादापत्तिः, तत्र सुखकारणादृष्टाभावात् । नव्यमते नास्त्यात्मत्वजातिरीश्वरे, न चैवं तस्य दशमद्रव्यत्वापत्तिः, ज्ञानवत्त्वेन विभागे सामञ्जस्यादिति बोध्यम् ॥

४० प्रश्नः—चेतनरूपात्मसत्त्वे किं मानम् ? कथं तस्य शरीरेन्द्रियातिरिक्तता ? कथञ्च तस्य नित्यता ?

उत्तरम्—अथ यदचेतनं यदुपधायकं भवति तत्तदुपधाने चेतनाधिष्ठितं भवतीति व्याप्त्या शरीरेन्द्रियाणि चेतनाधिष्ठितानि अचेतनत्वे सति जनकत्वावच्छेदकत्वान्यतरसम्बन्धेन ज्ञानवत्त्वाद् वास्यादिवदित्यनुमानेन चेतनरूपात्मा सिद्ध्यति ।

ननु न्यायनये मुक्तात्मनि प्राणविशिष्टात्मविरहात् ज्ञानरूपचैतन्यासत्त्वमिव चार्वाकमते मृतशरीरे प्राणाभावात् चैतन्यासत्त्वमित्यभ्युपगमेन दोषाभावात् प्रत्यक्षसिद्धशरीरमेव चेतनरूपात्मास्त्विति चेन्न । उपचयापचयैरुत्पादविनाशवतः शरीरस्य चैतन्ये—अनुभवस्मरणयोः सामानाधिकरण्येन कार्यकारणभावात् बाल्ये विलोकितस्य स्थाविरे स्मरणानुपपत्तेः, प्रवृत्तिकारणेष्टसाधनतास्मरणाभावाद् बालकस्य स्तन्यपाने प्रवृत्त्यनुपपत्तेश्च । नापि चक्षुरादीनामेव चेतनरूपात्मता, तथा सति निरुक्तकार्यकारणभावात्—प्राक् चक्षुषा ज्ञातानां पश्चाच्चक्षुषोऽभावे स्मरणानुपपत्तेः । नच मनसः तादृशात्मता, तथा सति मनसः प्रत्यक्षकारणमहत्त्वाभावात् मनसि ज्ञानादिसत्त्वे तत्प्रत्यक्षानुपपत्तेः ।

तथा चानादिसंसारे जीवनादृष्टोद्बुद्धसंस्कारजन्यजन्मान्तरानुभूतेष्टसाधनत्वस्मरणाद् बालस्य स्तन्यपानप्रवृत्तिदर्शनादात्मनोऽनादित्वसिद्धावनादिभावस्य नाशासंभवात्तस्य नित्यत्वं सिद्ध्यतीति दिक् ।

४१. प्रश्नः—क्षणिकविज्ञानवादिबौद्धानां मतमुपन्यस्य निराक्रियताम् ।

उत्तरम्—अथ बौद्धविशेष (योगाचार) मते घट इति-प्रवृत्तिविज्ञानाहमित्यालयविज्ञानयोः द्वितीयस्य स्वप्रकाशतया चेतनत्वाद् भावत्वेन च क्षणिकत्वात् क्षणिकतादृशविज्ञानमेवात्मा । नच सुषुप्तौ प्रागुत्पन्नविज्ञानस्य नाशात्, विज्ञानान्तरस्य चानुत्पादात् तत्रात्मसत्त्वानुपपत्तिः, पूर्वपूर्वविज्ञानेनोत्तरोत्तरविज्ञानजननात् । नच विज्ञाननाशे तदाश्रितसंस्कारनाशात् कालान्तरे स्मरणानुपपत्तिः, पूर्वपूर्वविज्ञानजनितसंस्काराणामुत्तरोत्तरविज्ञाने सङ्क्रमणादिति चेन्न, विज्ञानस्यात्मत्वासंभवात् । तथा हि जगद्विषयकं यत्किञ्चिद्विषयकं वा निर्विषयकं वा विज्ञानमात्मा । नाद्यः—सकलात्मनां सर्वज्ञत्वापत्तेः । न द्वितीयः—इदंविषयकं विज्ञानमात्मा तद्विषयकं नेत्यत्र विनिगमनाविरहात् । न च तृतीयः—निर्विषयस्य ज्ञानत्वे मानाभावात् । नापि कालान्तरे स्मरणोपपत्तिः, मात्राऽनूभूतस्य गर्भस्थतनयेन स्मरणापत्त्या पूर्वविज्ञानसंस्कारस्योत्तरविज्ञाने सङ्क्रमणासंभवात् । नचोपादानोपादेयोभावस्य नियामकत्वेन, उत्तरविज्ञानानामेव वासनोत्पादरूपसंक्रमजनकत्वेन च व्यवस्था, संस्कारानन्त्यप्रसङ्गादिति ।

४२. प्रश्नः—नित्यविज्ञानात्मवादिनां वेदान्तिनां मतमुपपाद्य निराक्रियताम् ।

उत्तरम्—अथ वेदान्तिमते "अविनाशी वाऽरेऽयमात्मा, सत्यं ज्ञानमनन्तं ब्रह्म, नित्यं विज्ञानमानन्दं ब्रह्मे" त्यादिश्रुत्यनुसारेण नित्यविज्ञानमेवात्मेति चेन्न, विकल्पासहत्वात्। तथाहि सकलविषयकं यत्किञ्चिद्विषयकं निर्विषयं वा विज्ञानमात्मा? नाद्यः—निखिलजीवानां सर्वज्ञत्वापत्तेः? न द्वितीयः—विनिगमनाविरहात्। न तृतीयः-निर्विषयस्य ज्ञानत्वे मानाभावात्। नचैवमुक्तश्रुतिविरोधः, बन्धमोक्षाव्यवस्थाभिया जीवेशयोर्भेदेन तस्या ब्रह्म-परतयोपपत्तेः। नचैवं "तत्त्वमसी"त्यादिश्रुतिरनुपपन्ना,"निरञ्जनः परमं साम्यमुपैती" त्यादिश्रुत्यनुरोधेन तस्या निर्दुःखत्वेन साम्यप्रतिपादनपरतया समुपपत्तेः।

वस्तुतस्तु परमात्माऽपि न ज्ञानादिरूपः, किन्तु ज्ञानाद्याश्रयः, "नित्यं विज्ञानमानन्दं ब्रह्मे" त्यादौ विज्ञानपदस्य "यः सर्वज्ञः सर्वविदि" त्यादिश्रुत्यनुरोधेनार्श आद्यजन्तज्ञानवदर्थकत्वाभ्युपगमेन, आनन्दपदस्य नपुंसकलिङ्गत्वदर्शनादर्शआद्यजन्तानन्दवदर्थकत्वाङ्गीकारेण च सामञ्जस्यात्। अत एव "असुखमि" त्यादिश्रुतिरपि संगच्छते। इति दिक्॥

४३—प्रश्नः—प्रकृतेः कर्तृत्वं पुरुषस्य च चैतन्यमिति सांख्यकृन्मतमुपपाद्य सयुक्तिकं खण्ड्यताम्।

उत्तरम्—अथ "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥" इति पञ्चविंशतितत्त्वाभ्युपगन्तृसांख्यकृन्मते—बुद्धिगतचैतन्याभिमानान्यथानुपपत्तिकल्पितपुरुषश्चेतनो निर्लेपश्च। तस्य, कार्यकारणयोरभेदात् कार्यनाशे नाशापत्तेरकारणत्वेनाकर्तृत्वे प्रकृतिः कर्त्री, अतः—"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते" इति गीताऽपि संगच्छते। पुरुषे कर्तृत्वाभिमानो बुद्धौ चैतन्याभिमानश्च तयोर्भेदाग्रहात्। एवं 'धार्मिकोऽहं करोमी'त्यादिप्रतीत्या कृतिसामानाधिकरण्येन प्रतीयमाना धर्मादयोऽपि बुद्धेरेव। न चैवं पुरुषस्य संसारापवर्गानुपपत्तिः, प्रकृतिपरिणामबुद्धिसत्त्वासत्त्वाभ्यां तस्य संसारमोक्षसंभवादिति चेन्न, 'चेतनोऽहं करोमी'ति प्रतीत्या चैतन्यसामानाधिकरण्येन प्रतीयमानकृतेरात्मनिष्ठत्वौचित्येन कृतिसामानाधिकरण्येन प्रतीयमानधर्मादीनामपि पुरुषनिष्ठत्वौचित्यात्। कर्तृचेतनयोर्भेदे बुद्धेर्नित्यत्वे तत्सत्त्वनिबन्धनसंसारस्य सर्वदापत्त्या मोक्षस्य, अनित्यत्वे तदुत्पत्तेः प्राक् तत्सत्त्वनिबन्धनसंसारस्य चानुपपत्तेः। नचैवमुक्तगीताविरोधः, तस्याः

तेरदृष्टस्य गुणैरदृष्टजन्यैरिच्छादिभिः कर्त्ताऽहमेवे" त्यर्थकतया आत्मनः स्वतन्त्रकर्तृत्वनिरासे तात्पर्यात्। अतः "तत्रैवं सति कर्त्तारमात्मानं केवलं तु यः" इत्यादि संगच्छते। इति दिक्।

४४. प्रश्न—"प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः" इति विश्वनाथः। अत्र प्रवृत्तिपदार्थः कः? अनुमानप्रणाली च कीदृशी?

उत्तरम्—अथात्र प्रवृत्तिपदार्थः चेष्टा, यत्नादीनां देहेऽभावात्। सा च-इष्टानिष्टप्राप्तिपरिहारानुकूलव्यापाररूपा। तथा च जीवच्छरीरं प्रयत्नवच्चेतनाधिष्ठितं चेष्टावत्त्वात् रथवदित्यनुमानेन परदेहादावात्मसिद्धिः। न च तादृशचेष्टाया रथेऽसत्त्वात् दृष्टान्तासिद्धिः, चेष्टापदेन सुश्रृङ्खलक्रियाया एव विवक्षणात्। न चैवमपि जले व्यभिचारः, चेष्टापदेन चेतनप्रयुक्तक्रियाया एव विवक्षणादिति दिक्।

४५. प्रश्नः—प्रत्यक्षलक्षणमनुमितिलक्षणञ्च तथा प्रतिपाद्यताम्, यथा प्रत्यक्षलक्षणस्येश्वरप्रत्यक्षेऽव्याप्तिरतिव्याप्तिश्चानुमित्यादौ न प्रसज्येत, नापद्येत चानुमितिलक्षणस्य प्रत्यक्षेऽतिव्याप्तिः।

उत्तरम्—अथेन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यतावत्त्वे सति ज्ञानत्वं प्रत्यक्षत्वम्। तेनानुमित्यादौ मनोरूपेन्द्रियजन्यत्वसत्त्वेऽपि तादृशजन्यताया अभावान्नातिव्याप्तिः। न चेश्वरप्रत्यक्षेऽव्याप्तिः। इन्द्रियार्थसन्निकर्षोत्पन्नमित्यादिसूत्रेण तस्यालक्ष्यतासूचनात्। अथवा ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्। तथा चेश्वरप्रत्यक्षस्य तादृशतया तत्र नाव्याप्तिः, नातिव्याप्तिश्चानुमित्यादौ, तत्र व्याप्तिज्ञानादिकरणकत्वस्य सत्त्वात्।

अथ परामर्शजन्यहेत्वविषयकज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वमनुमितेर्लक्षणम्, तथा च परामर्शप्रत्यक्षस्य परामर्शजन्यत्वेऽपि हेतुविषयकत्वात्तत्र नातिव्याप्तिः। वस्तुतः यत्किञ्चित्प्रत्यक्षमादाय तद्व्यक्तिवृत्त्यनुमित्यवृत्तिजातिमत्त्वं प्रत्यक्षत्वम्, एवं यां काञ्चिदनुमितिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षावृत्तिजातिमत्त्वं प्रत्यक्षत्वम्, एव यां काञ्चिदनुमितिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षावृत्तिजातिमत्त्वमनुमितत्वमिति दिक्।

४६. प्रश्नः—बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे किं कारणमिति प्राच्यनव्यमतेन विविच्यताम्।

उत्तरम्—अथ चाक्षुषप्रत्यक्षे रूपस्य त्वाचप्रत्यक्षे स्पर्शस्य कारणत्वे गौरवमिति लाघवात् बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे रूपं कारणम्। न चैवं वायोर-

प्रत्यक्षापत्तिः, तस्या इष्टत्वात्। न च बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे स्पर्श एव कारणमस्त्विति वाच्यम्, तथा सति प्रभाया अप्रत्यक्षापत्तेरिति प्राचीनाः।

अथ 'प्रभां पश्यामीतिवत् वायुं स्पृशामी'ति प्रतीतेः सत्त्वात् वायोरपि प्रत्यक्षं भवतीति बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे आत्मावृत्तिशब्दभिन्नविशेषगुणः कारणम्, न रूपम्। तथाऽन्वयव्यतिरेकाभ्यां चाक्षुषप्रत्यक्षे रूपं, त्वचाप्रत्यक्षे स्पर्शः कारणम्। न च वायोः प्रत्यक्षे तद्गतसंख्याया अपि प्रत्यक्षं स्यादिति वाच्यम्, प्रभागतैकत्वादेरिव वायुगतैकत्वादेरपि प्रत्यक्षस्येष्टत्वात्। क्वचित् सजातीयसंवलनरूपदोषान्न संख्यादीनां ज्ञानमिति नवीनाः॥

४७. प्रश्नः—जन्यज्ञानसामान्ये किं कारणमिति सोपपत्तिकमुपपाद्यताम्।

उत्तरम्—अथ त्वङ्मनःसंयोगेन ज्ञानजननात्, सुषुप्तिकाले मनः त्वचं विहाय पुरीतति तिष्ठतीति तदभावेन ज्ञानानुत्पादाच्च त्वङ्मनःसंयोगो जन्यज्ञानसामान्ये कारणम्। ननु सुषुप्तिकाले चक्षुरादिमनःसंयोगाभावादेव चाक्षषादिप्रत्यक्षम्, ज्ञानाद्यभावादेव मानसप्रत्यक्षम्, व्याप्तिज्ञानाभावादेवानुमितिः, सादृश्यज्ञानाभावादेवोपमितिः, पदज्ञानाभावादेव शाब्दबोधः, उद्बोधकाभावादेव स्मृतिश्च न संभवतीति क्षत्यभावात् जन्यज्ञानमात्रे तस्याहेतुत्वमेवास्त्विति चेन्न। तथा सति सुषुप्तिप्राक्कालोत्पन्नज्ञानस्य तत्सम्बन्धेनात्मनश्च प्रत्यक्षत्वापत्तेः। न चैवं चाक्षुषादिप्रत्यक्षकाले विषयत्वक्संयोग—त्वङ्मनःसंयोगयोः सत्त्वेन त्वाचप्रत्यक्षापत्तिः, परस्परप्रतिबन्धात् किमपि ज्ञानं नोपपद्येत वेति वाच्यम्। चाक्षुषादिप्रत्यक्षसामग्र्याः त्वाचप्रत्यक्षं प्रति प्रतिबन्धकत्वकल्पनात्। मिश्रमते चर्ममनःसंयोगस्यैव जन्यज्ञानमात्रे हेतुत्वकल्पनेन नोक्तदोष इति ध्येयम्॥

४८. प्रश्न—निर्विकल्पकज्ञानस्यावश्यकता का? कथं तस्यातीन्द्रियत्वम्? किं तस्य लक्षणम्? कस्तस्याकारः? कथञ्च तस्य न निर्विषयता?

उत्तरम्—अथ घटचक्षुःसंयोगाद्यनन्तरं कदाचिज्जायमानस्य स्वरूपतो घटत्वप्रकारक-घटइत्याकारकज्ञानस्य विशिष्टबुद्धौ विशेषणज्ञानस्य कारणतया घटत्वविषयकज्ञानाभावेऽनुपपद्यमानस्य समुपपादनायादावनवस्थाभिया सांसर्गिकविषयताशून्यनिर्विकल्पकज्ञानाभ्युपगमः।

तथा घटमहं जानामीति ज्ञानप्रत्यक्षम्—आत्मनि ज्ञानं, तत्र च घटत्वं प्रकारतयाऽवगाहत इति विशेषणावच्छेदकप्रकारकज्ञानस्य विशिष्टवैशिष्ट्यावगाहिज्ञानं प्रति कारणत्वात् विशिष्टवैशिष्ट्यावगाहितया, रक्तः पटो घटश्च द्रव्यमिति समूहालम्बनानन्तरं रक्तं घटं जानामीति प्रतीतिवारणाय विशिष्टवैशिष्ट्यविषयताशून्यज्ञानानुव्यवसायानभ्युपगमात् विशेष्ये विशेषणमिति रीत्या च निर्विकल्पकज्ञानानुव्यवसायासंभवात् तस्याप्रत्यक्षतयाऽतीन्द्रियता।

तथा च प्रकारता–संसर्गता–विशेष्यतान्यतमविषयतामादाय—तदनवगाहित्वे सति ज्ञानत्वं निर्विकल्पकज्ञानस्य लक्षणम्। एवमत्र तस्य घट–घटत्वे इत्याकारः। न च प्रकारतादित्रिविधविषयताशून्यत्वात्तस्य निर्विषयत्वापत्तिः, तुरीयविषयताया एव तत्राभ्युपगमादिति दिक्॥

४९. प्रश्नः—इन्द्रियत्वं कथन्न जातिः? किञ्च तस्य लक्षणम्?

उत्तरम्—अथ पृथिवीत्वाभाववद्रसनेन्द्रियवृत्तीन्द्रियत्वस्य, इन्द्रियत्वाभाववद्घटादिवृत्तिपृथिवीत्वस्य च घ्राणेन्द्रिये समावेशात् पृथिवीत्वेन साङ्कर्यादिन्द्रियत्वं न जातिः। तथा च शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियस्य लक्षणम्। तत्रात्मादावतिव्याप्तिवारणाय सत्यन्तम्, तत्रोद्भूत विशेषगुणशब्दाश्रयश्रोत्रेऽव्याप्तिवारणाय शब्देतरेति, विशेषगुणरूपादिमच्चक्षुरादावव्याप्तिवारणायोद्भूतेति, तादृशसंयोगादिमच्चक्षुरादावव्याप्तिवारणाय च विशेषेति। कालादावतिव्याप्तवारणाय विशेष्यदलम्, तत्र प्राच्यमते प्रत्यक्षजनकेन्द्रियावयवविषयसंयोगाश्रयेन्द्रियावयवे, नव्यमते च कालादिनिष्ठरूपाभावप्रत्यक्षकारणचक्षुःसंयोगाश्रयकालादावतिव्याप्तिवारणाय मनःपदम्; कालादावतिव्याप्तिवारणाय च ज्ञानकारणमितीति दिक्॥

५०. प्रश्नः—पृथिवीपरमाणौ पृथिवीत्वस्य, वायौ सत्तायाश्च प्रत्यक्षापत्तिः कथम्? कथञ्च तत्परिहारः? समवायस्य वैशेषिकमते कथमप्रत्यक्षता? कथञ्च नैयायिकमते तत्प्रत्यक्षता?

उत्तरम्—अथ विषयतासम्बन्धेन द्रव्यसमवेतचाक्षुषम्प्रति चक्षुःसंयुक्तसमवायः महत्त्वमुद्भूतरूपमालोकसंयोगश्च कारणमिति पृथिवीपरमाणुवृत्तिपृथिवीत्वे वायुवृत्तिसत्तायाञ्च स्वरूपेण चक्षुःसंयुक्तसमवायस्य, स्वाश्रयसमवेतत्वसम्बन्धेन महत्त्वोद्भूतरूपालोकसंयोगानाञ्च सत्त्वेन तादृशसत्तायाश्च चाक्षुषप्र-

त्यक्षं कुतो नेति चेन्न, महत्त्वावच्छिन्नालोकसंयोगावच्छिन्नचक्षुःसंयोगाश्रयसमवायस्य द्रव्यसमवेतचाक्षुषम्प्रति कारणत्वाभ्युपगमेन परमाणौ महत्त्वाभावात्, वायावुद्भूतरूपाभावाच्च तादृशपृथिवीत्वस्य तादृशसत्तायाश्च चाक्षुषप्रत्यक्षासंभवात्। वैशेषिकमते घटाकाशसंयोगस्य प्रत्यक्षवारणाय सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य कारणत्वेन यावतामेकसमवायाश्रयाणामेकदा प्रत्यक्षासंभवात्समवायस्याप्रत्यक्षता। नैयायिकमते तु तादृशसंयोगस्य प्रत्यक्षवारणाय संयोगप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुतया समवायस्य प्रत्यक्षं भवतीति बोध्यम् ॥

५१. प्रश्नः—कथं मीमांसकमते योग्यानुपलब्धेः प्रमाणान्तरत्वम्? कथं तत् खण्डितम्? तस्मिन् खण्डिते च नैयायिकमते भूतले घटोपलब्धिदशायां घटाभावोपलब्धिः कुतो न जायते? अनुपलब्धौ योग्यत्वं किम्? तस्य प्रयोजनञ्च किम्?

उत्तरम्—अथावयवावयव्यादीनां स्वरूपस्यैव सम्बन्धतया समवायानभ्युपगमात् तत्प्रत्यक्षार्थं विशेषणतायाः सन्निकर्षत्वास्वीकारादभावज्ञानाय योग्यानुपलब्धिरेव प्रमाणान्तरमिति मीमांसकमतम्, तन्न युक्तम्, योग्यानुपलब्धेर्व्यापाराभावेन व्यापारवत्कारणत्वघटितप्रमाणत्वासंभवात्। न चैवं विशेषणतासन्निकर्षोऽभावप्रत्यक्षकारणमिति नैयायिकमते भूतले घटोपलब्धिदशायामपि घटाभावप्रत्यक्षापत्तिरिति वाच्यम्, अभावप्रत्यक्षं प्रति योग्यानुपलब्धेः सहकारिकारणत्वस्य नैयायिकेनाप्यभ्युपगमात्। अनुपलब्धौ योग्यत्वञ्च प्रतियोगिसत्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपम्। तत्र योग्यत्वविशेषणादेव अन्धकारे घटाभावादेः, अयोग्यगुरुत्वाद्यभावस्य च प्रत्यक्षं न भवतीति दिक्।

५२. प्रश्नः—सामान्यलक्षणः कः?, तत्र सामान्यपदस्य लक्षणपदस्य च कोऽर्थः? तस्य स्वरूपं किम्? तेन कुत्र कीदृशं ज्ञानं जायते?, कथञ्च सामान्यज्ञानस्य सामान्यलक्षणत्वम्?

उत्तरम्—अथ सामान्यलक्षणोऽलौकिकसन्निकर्षः। तत्र समानानां भावः सामान्यमिति व्युत्पत्त्या सामान्यपदस्य धर्ममात्रमर्थः। तच्चेन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतं ग्राह्यम्। लक्षणपदस्य च स्वरूपमर्थः। तथा च सामान्यं लक्षणं यस्येति व्युत्पत्त्या तादृशसामान्यस्वरूपः सन्निकर्ष इत्यर्थः फलितः। तथा च यत्रेन्द्रियसंयुक्तधूमविशेष्यकं धूम इति ज्ञानं जातं, तत्र तादृशज्ञानप्रकारीभूतधूमत्वसन्निकर्षेण धूमा इत्याकारकं सकलधूमविषयकज्ञानं जायते।

वस्तुतस्तु—लक्षणपदस्य विषयोऽर्थः, तथा च निरुक्तव्युत्पत्त्या सामान्यविषयकज्ञानस्वरूपः सन्निकर्ष इति लभ्यते। तेन यत्र तद्घटनाशानन्तरं तद्घटवतः स्मरणं तत्र तद्घटात्मकसामान्यस्याभावेऽपि तद्घटविषयकज्ञाननरूपसामान्यलक्षणेन सर्वेषां तद्घटवतां स्मृतेरुपपत्तिरिति बोध्यम् ॥

५३. प्रश्नः—इन्द्रियसम्बद्धनिरूपितवृत्तितावतो धर्मस्य सामान्यलक्षणात्वमस्ति न वा, अस्ति चेत्कथम्? सामान्यलक्षणायाः सन्निकर्षत्वे का युक्तिः, तस्याश्च सामान्यज्ञानरूपत्वे ज्ञानलक्षणया सह कथन्नाभेदः?

उत्तरम्—अथेन्द्रियसम्बद्धनिरूपितवृत्तितावतो धर्मस्य सामान्यलक्षणात्वं न संभवति, तथा सति इन्द्रियसम्बद्धधूलीपटले अयं धूम इति भ्रमानन्तरं धूमत्वज्ञानरूपसामान्यलक्षणया जायमानस्य सकलधूमविषयकज्ञानस्यानुपपत्तेः, धूमत्वे इन्द्रियसम्बद्धनिरूपितवृत्तिताया अभावात् ।

ननु सामान्यलक्षणायाः सन्निकर्षत्वे का युक्तिरिति चेन्न, तस्या असन्निकर्षत्वे प्रत्यक्षधूमे वह्निसम्बन्धस्य गृहीतत्वात् धूमान्तरस्य चानुपस्थितत्वात् धूमो वह्निव्याप्यो न वेति संशयानुपपत्तेः । तस्याः प्रत्यासत्तित्वे तु धूमत्वज्ञानरूपसन्निकर्षेण सकलधूमानां वह्नित्वज्ञानात्मकतत्सन्निकर्षेण सकलवह्नीनां च ज्ञाने जाते कालान्तरीयदेशान्तरीयधूमे तादृशवह्निव्याप्यत्वसंशयोपपत्तेः ।

ननु सामान्यलक्षणायाः सामान्यज्ञानरूपत्वे ज्ञानलक्षणायाः ज्ञानरूपतया तयोर्भेदानुपपत्तिरिति चेन्न, सामान्यलक्षणायाः सामान्याश्रयज्ञानजनकतया ज्ञानलक्षणायाश्च यद्विषयकज्ञानता तद्विषयकज्ञानस्यैव जनकतया तयोर्भेदादिति।

५४. प्रश्नः—ज्ञानलक्षणा का, सा किंस्वरूपा, तस्याः सन्निकर्षत्वाङ्गीकारे च का युक्तिः, योगजसन्निकर्षस्य च कस्मिन्पदार्थेन्तर्भावः?

उत्तरम्—अथ ज्ञानलक्षणा अलौकिकप्रत्यासत्तिः । सा च स्वसंयुक्तमनःसंयुक्तात्मसमवेतज्ञानविषयत्वरूपा । ननु सौरभत्वज्ञानात्मकसामान्यलक्षणसन्निकर्षेणैव सुरभि चन्दनमिति ज्ञाने सोरभस्य भानसंभवे ज्ञानलक्षणायाः सन्निकर्षत्वाङ्गीकारोऽयुक्तिक इति चेन्न, सौरभत्वांशे धर्मान्तरस्यागृहीततया सामान्यलक्षणया सौरभत्वस्य भानासंभवात्तदर्थं ज्ञानलक्षणायाः सन्निकर्षस्याङ्गीकारात्।

एवं योगजसन्निकर्षस्य श्रुत्यादिप्रतिपाद्ययोगाभ्यासजनितधर्मविशेषरूपस्य गुण-पदार्थेऽन्तर्भाव इति बोध्यम् । इति प्रत्यक्षखण्डं समाप्तम् ।

---

# अथानुमानखण्डम्

५५. प्रश्नः—व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्यानुमितिं प्रति कारणतेति कस्य मतम् ? तदुत्थितौ किं बीजम् ? तत्समीचीनं न वा ? चेत् कथम् ? किञ्च नैयायिकमतम् ?

उत्तरम्–अथ वह्निव्याप्यधूमवान् पर्वत इति ज्ञानाभावेऽपि पर्वतो धूमवानितिप्रत्यक्षवह्निव्याप्यो धूम इतिव्याप्तिस्मरणाभ्यामपि पर्वतो वह्निमानित्यनुमिति जननेन व्यतिरेकव्यभिचारात् व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानमनुमितिं प्रति न कारणम् , किन्तु व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानमिति मीमांसकमतम्, तन्न युक्तम् , धूमवान् पर्वत इति व्याप्यतावच्छेदकधूमत्वप्रकारकपक्षधर्मताज्ञानादनुमित्यापत्तेः । नच गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्य तद्धेतुतया न दोषः, चैत्रस्य व्याप्तिग्रहे मैत्रस्य पक्षधर्मताज्ञानादनुमित्यापत्तेः । नच तत्पुरुषीयगृह्यमाणव्याप्यतावच्छेदकप्रकारकतत्पुरुषीयपक्षधर्मताज्ञानस्य तत्पुरुषीयानुमितौ हेतुतया न कोऽपि दोषः, पुरुषभेदेनानन्तकार्यकारणभावापत्तेः ।

नैयायिकमते समवायेन व्याप्तिप्रकारकपक्षधर्मताज्ञानं समवायेनानुमितिं प्रति जनकमिति स्वीकारेण नानन्तकार्यकारणभावः, तथा च निरुक्तस्थले व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानं परामर्शात्मकं कल्प्यमेवेति न व्यभिचार इति बोध्यम् ।

५६. प्रश्नः—साध्यवदन्यस्मिन्नसम्बन्ध इति मूलोक्तव्याप्तिलक्षणं विश्वनाथरीत्या व्याख्याय पर्यवसितं व्याप्तिलक्षणं निरूप्यताम् ।

उत्तरम्—अथ मूलोक्तव्याप्तिलक्षणघटकसाध्यवत्पदं साध्यवत्प्रतियोगिकपरम् , तस्याभेदेनान्यपदार्थैकदेशभेदे, भेदवतः सप्तम्यर्थनिरूपितत्वेन सम्बन्धपदार्थवृत्तित्वे तस्य च प्रतियोगितयाऽभावेऽन्वयः । तथा च साध्यवत्प्रतियोगिकभेदवन्निरूपितवृत्तित्वाभावो व्याप्तिरिति तदर्थः । तत्र प्रतियोगिकान्तपदस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकमात्रावच्छिन्नसाध्यमात्रनिष्ठावच्छेदकतानिरूपकप्रतियोगिताकेत्यर्थः । तेन वह्निमान् धूमादित्यत्रसमवायेन वह्निमतः, तद्वह्निमतः, वह्निमद्घटोभयस्य च भेदमादाय नाव्याप्तिः । तादृशावृत्तिता च हेतुतावच्छेदकसम्बन्धावच्छिन्ना बोध्या । तेन तादृशभेदवति धूमाव-

थवादौ समवायादिना धूमस्य सत्त्वेऽपि तत्र नाव्याप्तिः । तादृशवृत्तित्वाभावश्च तादृशवृत्तितात्वमात्रावच्छिन्नप्रतियोगिताको बोध्यः । तेन धूमवान् वह्नेरित्यत्र तादृशवृत्तित्वस्य विशेषाभावमुभयाभावञ्चादाय नातिव्याप्तिः । नचैवमपि द्रव्यं विशिष्टसत्त्वादित्यत्र विशिष्टशुद्धसत्त्वयोरैक्यादव्याप्तिरिति वाच्यम्, साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकमात्रावच्छिन्नसाध्यमात्र - निष्ठावच्छेदकतानिरूपकप्रतियोगिताकभेदवन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तितानवच्छेदकहेतुतावच्छेदकवत्त्वं व्याप्तिरिति तन्निष्कर्षेणादोषादिति दिक् ।

५७. प्रश्नः—अथवा हेतुमन्निष्ठविरहाप्रतियोगिनेति-कारिकोक्तसिद्धान्तव्याप्तिलक्षणं विश्वनाथोक्तदिशा संक्षेपेण व्याख्यायताम् ।

उत्तरम्—अथ अथवेत्यादिव्याप्तिलक्षणस्य हेतुमति निष्ठा यस्येत्यादिव्युत्पत्त्या हेत्वधिकरणवृत्त्यभावाप्रतियोगिसाध्येन हेतोरैकाधिकरण्यं व्याप्तिरित्यर्थः । तादृशाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं विवक्षितम् । तेन गुणवान् द्रव्यत्वादित्यत्र रसाद्यभावमादाय नाव्याप्तिः । हेत्वधिकरणं हेतुतावच्छेदकसम्बन्धेन हेतुतावच्छेदकावच्छिन्नाधिकरणं बोध्यम्, तेन वह्निमान् धूमादित्यत्र समवायेन धूमवन्तमादाय, द्रव्यं विशिष्टसत्त्वादित्यत्र च गुणनिष्ठाभावमादाय नाव्याप्तिः । अभावश्च प्रतियोगिव्यधिकरणो बोध्यः, तेन कपिसंयोगी एतद्वृक्षत्वादित्यत्र साध्याभावमादाय नाव्याप्तिः । प्रतियोगिव्यधिकरणत्वञ्च प्रतियोग्यनधिकरणवृत्तित्वम् । तत्र प्रतियोग्यनधिकरणत्वञ्च साध्यतावच्छेदकसम्बन्धेन यत्प्रतियोगितावच्छेदकावच्छिन्नाधिकरणं तद्भिन्नत्वम् । तेन ज्ञानवान् सत्त्वादित्यत्र सर्वस्य विषयतया ज्ञानवत्त्वात्, विशिष्टसत्तावान् जातेरित्यत्र च साध्याभावस्य गुणादौ प्रतियोगिसमानाधिकरणत्वात् नातिव्याप्तिरिति दिक् ।

५८. प्रश्नः—नच समानाधिकरणवह्निधूमयोरेव व्याप्तिरिति वाच्यम्, तद्वह्नेरप्युभयाभावसत्त्वादेकवत्त्वेऽपि द्वयं नास्तीति प्रतीतेः । गुणवान् द्रव्यत्वादित्यादावव्याप्तिश्चेति विश्वनाथः । कीदृग्-लक्षणे कीदृशाशङ्कायां ग्रन्थस्यास्यावतारः ? एकसत्त्वेऽपीत्यादिप्रतीत्या चात्र किं प्रतिपादितम् ? गुणवान् द्रव्यत्वादित्यादिस्थलान्तरानुसरणे च किं बीजम् ? अत्राव्याप्तिप्रकारं प्रदर्श्य विश्वनाथदर्शिता तत्परिहाररीतिः प्रतिपादनीया ।

३ मु० त०

उत्तरम्—अथ हेतुसमानाधिकरणाभावप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरिति लक्षणे वह्निमान् धूमादित्यत्र वह्नेः हेतुसमानाधिकरणतत्तद्वह्न्यभावप्रतियोगितयाऽव्याप्तिरिति शङ्कायाम् "न च समानाधिकरणवह्निधूमयोरेव व्याप्तिरि" त्यादिग्रन्थावतारः। तथा च समानाधिकरणयोरेव व्याप्तिरिति तत्र विवक्षणेपि तत्तद्वह्नेः विशिष्टाभावम्, एकसत्त्वेऽपि द्वयं नास्तीति प्रतीत्याऽत्र प्रत्येकाभावातिरिक्तोभयाभावसत्त्वसूचनादुभयाभावं वाऽऽदायाव्याप्तिस्तदवस्थेति तदाशयः।

ननु वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वेनाभावस्य विशेषिततया तत्र दोषाभावेऽपि गुणवान् द्रव्यत्वादित्यत्र हेत्वधिकरणजलादौ गन्धो नास्तीत्यादि-प्रतीतिसिद्धगन्धाद्यभावप्रतियोगित्वस्य गुणे सत्त्वेनाव्याप्तिरिति चेन्न, तादृशाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति विवक्षणेन तादृशगन्धाद्यभावप्रतियोगितानवच्छेदकगुणत्वावच्छिन्नसामानाधिकरण्यस्य द्रव्यत्वे सत्त्वेन लक्षणसमन्वयादिति बोध्यम्।

५९. प्रश्नः—अभावश्च प्रतियोगिव्यधिकरणो बोध्य इति विश्वनाथः। किमर्थास्य ग्रन्थस्योत्थितिः? अत्र प्रतियोगिव्यधिकरणत्वस्य प्रतियोग्यनधिकरणवृत्तित्वरूपता, प्रतियोग्यधिकरणावृत्तित्वात्मकता वा सम्भवति न वा? न सम्भवति चेत्कथम्? कश्च तस्य पर्यवसितोऽर्थः?

उत्तरम्—अथ संयोगस्याव्याप्यवृत्तितया कपिसंयोगी एतद्वृक्षत्वादित्यत्र साध्यस्य हेतुसमानाधिकरणकपिसंयोगाभावप्रतियोगितया प्रसक्ताया अव्याप्तेर्वारणाय अभावश्च प्रतियोगिव्यधिकरणो बोध्य इति ग्रन्थोत्थितिः। तत्र प्रतियोगिव्यधिकरणत्वस्य प्रतियोग्यनधिकरणवृत्तित्वात्मकता न सम्भवति, तथा सति तत्रैव साध्याभावस्य प्रतियोग्यनधिकरणगुणवृत्तितयाऽव्याप्तेः। एवं तस्य प्रतियोग्यधिकरणावृत्तित्वरूपताऽपि न सम्भवति, तथा सति संयोगी सत्त्वादित्यत्र साध्याभावस्य प्रतियोग्यधिकरणद्रव्यवृत्तितयाऽतिव्याप्तेः। तथा च प्रतियोगिव्यधिकरणत्वं प्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्तित्वमेव। नचैवं कपिसंयोगी एतद्वृक्षत्वादित्यत्र दोषस्तदवस्थः, प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावेत्यस्य प्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणवृत्त्यभावेति निष्कृष्टार्थकरणेनादोषादिति दिक्।

६० प्रश्नः—ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित्प्रतियोगिनोऽनधिकरणत्वं, तत्सामान्यस्य वा, यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं वा विवक्षितमिति विश्वनाथः। एतत्कल्पत्रयं ग्रन्थानुसारेण निरस्य सिद्धान्तपक्षो निरूप्यताम्।

उत्तरम्—ननु प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वमित्यनेन प्रतियोगितावच्छेदकावच्छिन्नयत्किञ्चित्प्रतियोगिनोऽनधिकरणत्वम्, अथवा प्रतियोगितावच्छेदकावच्छिन्नसामान्यस्यानधिकरणत्वम्, किं वा यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नसामान्यस्यानधिकरणत्वं विवक्षितम्? नाद्यः, कपिसंयोगी एतद्वृक्षत्वादित्यत्रैतद्-वृक्षस्य कपिसंयोगत्वावच्छिन्नवृक्षावृत्तिकपिसंयोगानधिकरणतया साध्याभावमादायाव्याप्तेः। न द्वितीयः, ह्रदो धूमाभाववान् वह्न्यभावादित्यत्राव्याप्तेः, तत्र प्रथमाभावस्य तृतीयाभावतया विशिष्टस्य शुद्धानतिरिक्ततया च हेत्वधिकरणस्य सकलस्याभावीयपूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणतया प्रतियोगिव्यधिकरणाभावाप्रसिद्धेः। न च तृतीयः, कपिसंयोगाभाववान् आत्मत्वादित्यत्राव्याप्तेः, तत्र साध्याभावस्य गुणरूपतया तदीययत्किञ्चित्प्रतियोगितावच्छेदकगुणाभावत्वावच्छिन्नानधिकरणात्मनि साध्याभावमादायाव्याप्तेः। तथा च यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणनिष्ठाभावीयतादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति निष्कर्ष इति दिक्॥

६१. प्रश्नः—कालो घटवान् कालपरिमाणादित्यत्र प्रतियोगिव्यधिकरणभावाप्रसिद्ध्या प्रसज्यमाना व्याप्तिलक्षणाव्याप्तिः कथं निराकृता ग्रन्थकृता?

उत्तरम्—ननु कालो घटवान् कालपरिमाणादित्यत्र कालस्य जगदाधारतया सर्वस्याभावस्य कालिकेन प्रतियोग्यधिकरणे सत्त्वेन प्रतियोगिव्यधिकरणाभावाप्रसिद्धेरव्याप्तिरिति चेन्न, कालस्य घटाधारत्वेऽपि काले कालभेदासत्त्वात् कालभेदविशिष्टघटानाश्रयतया तत्र कालभेदविशिष्टघटाभावस्य तादृशस्य प्रसिद्धेः। वस्तुतस्तु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणहेत्वधिकरणनिष्ठाभावीयप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्न-

त्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य हेतुव्यापकत्वं बोध्यम् । व्यापक-सामानाधिकरण्यं च व्याप्तिः । यत्सम्बन्धयद्धर्मौ साध्यतावच्छेदकसम्बन्धधर्मौ । तथा च प्रकृते समवायेन घटाभावमादाय समन्वय इति दिक् ॥

६२ प्रश्नः—परमतनिराकरणपूर्वकं सिद्धान्तिमतसिद्धं पक्षतालक्षणं प्रदर्शय ।

उत्तरम्—अथ सिषाधयिषामात्रं साध्यसंशयो वा न पक्षता, विनाऽपि सिषाधयिषां साध्यसंशयं वा घनगर्जनश्रवणेन गगनं मेघवत् घनगर्जनादित्य-नुमानस्य जननात् । नापि सिद्ध्यभावमात्रं पक्षता, सिद्धिसत्त्वे सिषाधयिषायां सत्यामनुमित्यनुपपत्तेः । तथा च सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता, वैशिष्ट्यञ्च एककालावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन । तथा च यत्र सिद्धिसिषा-धयिषे सिद्ध्यभावसिषाधयिषे वा सिद्ध्यभावसिषाधयिषाऽभावौ वा स्तस्तत्र क्रमशो विशेषणाभावोभयाभावविशेष्याभावप्रयुक्तविशिष्टाभावसत्त्वात् पक्षताऽ-स्तीति बोध्यम् ॥

६३ प्रश्नः—सिद्धिविशेषणसिषाधयिषाविरहविशिष्टत्वस्य वैयर्थ्य-माशंक्य सार्थक्यं विश्वनाथरीत्या प्रतिपादयत ।

उत्तरम्—अथ सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता । ननु योग्यविभुविशेषगुणानां तृतीयक्षणवृत्तिध्वंसप्रतियोगितया यौगपद्यनिषेधेन च यत्र सिद्धिसिषाधयिषापरामर्शाः सिद्धिपरामर्शसिषाधयिषा वा तत्र सिद्धेर्नाशेन प्रतिबन्धकाभावादेवानुमितिः । यत्र सिषाधयिषापरामर्शसिद्धयः, सिषाधयि-षासिद्धिपरामर्शा वा तत्र सिषाधयिषानाशेन प्रतिबन्धकसत्त्वान्नानुमितिः । यत्र च परामर्शसिद्धिसिषाधयिषाः परामर्शसिषाधयिषासिद्धयो वा तत्र परामर्शना-शादेव नानुमितिरिति व्यर्थं सिषाधयिषाविरहवैशिष्ट्यं सिद्धिविशेषणमिति चेन्न, यत्र वह्निव्याप्यधूमवान् पर्वतो वह्निमान्, अनुमितिश्चेष्टसाधनमिति समूहालम्ब-नात्मकज्ञानानन्तरं सिषाधयिषा तत्रानुमित्यर्थं पक्षतासम्पत्तये तद्विशेषणस्याव-श्यकत्वादिति दिक् ।

६४. प्रश्नः—पक्षतायाः सिद्धान्तलक्षणे इच्छाया अनुमितित्वप्रकार-केच्छात्वेनाननुगतरूपेणोत्तेजकत्वमनुक्त्वा गुरुभूत "यादृशयादृशसि-षाधयिषासत्त्वे सिद्धिसत्त्वे" इत्यादिकथने किन्तात्पर्यमिति समुपपाद्य

पर्वतधर्मिक-वह्न्यनुमितिसामग्रीकाले पर्वतप्रत्यक्षसामग्र्यां सत्यामपि पर्वतस्य प्रत्यक्षानुत्पत्तौ किं बीजमिति प्रतिपाद्यताम् ।

उत्तरम्—अथ सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षतेत्यत्र सिषाधयिषाया अनुमितित्वप्रकारकेच्छात्वेनानुगतरूपेणोत्तेजकत्वकल्पनेनैव सामञ्जस्ये यादृशयादृशसिषाधयिषेत्यादिरीत्या तत्तद्व्यक्तित्वेनोत्तेजकत्वकल्पनं निष्फलमिति चेन्न । वह्निव्याप्यधूमवान् पर्वतो वह्निमानिति प्रत्यक्षसत्त्वे प्रत्यक्षातिरिक्तं ज्ञानं जायतामितीच्छायां सत्यां जायमानाया अनुमितेरनुपपत्तेः, तादृशेच्छाया अनुमितित्वाप्रकारकत्वेनोत्तेजकत्वासंभवात् ॥

प्रत्यक्षेच्छाविरहविशिष्टानुमितिसामग्री विभिन्नविषयकप्रत्यक्षं प्रति प्रतिबन्धिका वाच्या । तेन पर्वतधर्मिकवह्न्यनुमितिसामग्रीकाले पर्वतप्रत्यक्षसामग्र्यां सत्यामपि प्रत्यक्षेच्छाविरहे पर्वतधर्मिकवह्न्यनुमितिरेव भवति । एवं तदानीं प्रत्यक्षेच्छासत्त्वे तु पर्वतप्रत्यक्षमेव भवतीति बोध्यम् ।

६५. प्रश्नः—हेत्वाभाससामान्यलक्षणं किम् ? तस्यैकदेशेऽतिव्याप्तिः, व्यभिचारे चाव्याप्तिः कथन्न ?

उत्तरम्—अथ हेत्वाभासपदस्य हेतूनामाभास इति व्युत्पत्त्या हेतुदोषपरत्वे अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयनिष्ठयद्रूपावच्छिन्नविषयता प्रकृतानुमितिनिष्ठप्रतिबध्यतानिरूपितबन्धकतावच्छेदिका तद्रूपवत्त्वं हेत्वाभासत्वम् । न चैवं ह्रदो वह्न्यभाववानिति-निश्चयीयवह्न्यभावविषयतायां स्वरूपसम्बन्धरूपतादृशप्रतिबन्धकतावच्छेदकतायाः सत्त्वेन वह्न्यभावेऽतिव्याप्तिरिति वाच्यम्, तादृशविषयतायाः प्रकृतानुमित्यप्रतिबन्धके वह्न्यभाव इति ज्ञानेऽपि सत्त्वेन तत्र विवक्षितानतिरिक्तवृत्तित्वरूपतदवच्छेदकताया असत्त्वात् । न चैवमपि व्यभिचारज्ञानस्यानुमित्यप्रतिबन्धकतया व्यभिचारेऽव्याप्तिरिति वाच्यम् । तत्रानुमितिपदस्यानुमितितत्करणान्यतरपरतया व्यभिचारज्ञानस्यानुमितिकरणव्याप्तिज्ञानविरोधितया तत्र समन्वयात् । हेत्वाभासपदस्य हेतुवदाभासन्ते इति व्युत्पत्त्या दुष्टहेतुपरत्वे स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन निरुक्तलक्षणलक्षितदोषवत्त्वं हेत्वाभासत्वमिति बोध्यम् ।

६६. प्रश्नः—बाधविरोधयोः कथं दोषसामान्यलक्षणं घटते ? सत्प्रतिपक्षे विरोधे च को विशेषः ?

उत्तरम्—अथ ह्रदो वह्निमानित्यनुमितौ वह्न्यभाववान् ह्रद इति बाधनिश्चयस्य प्रतिबन्धकतया प्रकृतानुमितिनिष्ठप्रतिबध्यतानिरूपितबन्धकतावच्छेदकतायाः निरुक्तानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयनिष्ठवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयतायां सत्त्वात् वह्न्यभाववद्ध्रदात्मकबाधे हेत्वाभासता। एवमयं गौरश्वत्वादित्यत्राश्वत्वं गोत्वव्यापकीभूताभावप्रतियोगितावदिति निश्चयस्य गोत्वाभावानुमितिजनकत्वात् गोत्वानुमितिविरोधितया निरुक्ततादृशनिश्चयनिष्ठाश्वत्वनिष्ठगोत्वव्यापकीभूताभावप्रतियोगितात्वावच्छिन्नविषयतायां तादृशप्रतिबन्धकतावच्छेदकतायाः सत्त्वात् तादृशप्रतियोगितारूपविरोधे हेत्वाभासता। ननु स्वरूपभिन्नयोरपि सत्प्रतिपक्षविरोधयोः प्रकृतानुमितिप्रतिबन्धकतावच्छेदकविषयतारूपदूषकताबीजैक्यादेकहेत्वाभासत्वं स्यादिति चेन्न, सत्प्रतिपक्षे प्रतिकूलद्वितीयहेतोः, विरोधे च प्रकृतहेतोरेव साध्याभावसाधकतेति भेदात्, विरुद्धहेतुप्रयोगकर्तुः यथा साध्याभावसाधकहेतावेव साध्यसाधकत्वभ्रमः न तथा सत्प्रतिपक्षितहेतुप्रयोगकर्तुरिति च विशेषसत्त्वादिति दिक्॥

६७. प्रश्नः—हेत्वाभासाः कतिविधाः? के च ते? किञ्च तेषां लक्षणम्? सव्यभिचारस्यासिद्धस्य च भेदान् प्रदर्श्य तेषां लक्षणानि सोदाहरणानि निरूप्यन्ताम्।

उत्तरम्—अथ हेत्वाभासाः पञ्चविधाः, सव्यभिचारविरुद्धसत्प्रतिपक्षितासिद्धबाधितभेदात्। तत्र साधारणाद्यन्यतमत्वं सव्यभिचारत्वम्। साध्यव्यापकीभूताभावप्रतियोगित्वं विरुद्धत्वम्। साध्याभावव्याप्यवत्पक्षकत्वं सत्प्रतिपक्षितत्वम्। आश्रयासिद्धाद्यन्यतमत्वम् असिद्धत्वम्। साध्याभाववत्पक्षकत्वं बाधितत्वम्। तथा सव्यभिचारस्त्रिविधः—साधारणासाधारणानुपसंहारिभेदात्। तत्र साधारणत्वं साध्यवदन्यवृत्तित्वम्, यथा—धूमवान् वह्नेरित्यत्र हेतुः साधारणः। असाधारणत्वं साध्यसामानाधिकरण्यम्, यथा—शब्दो नित्यः शब्दत्वादित्यत्र। अत्यन्ताभावाप्रतियोगिसाध्यकत्वमनुपसंहारित्वम्, यथा—सर्वं वाच्यं मेयत्वादित्यत्र। एवमसिद्धस्त्रिविधः—आश्रयासिद्धस्वरूपासिद्धव्याप्यत्वासिद्धभेदात्। तत्र पक्षतावच्छेदकाभाववत्पक्षकत्वम् आश्रयासिद्धत्वम्, यथा—काञ्चनमयपर्वतो वह्निमानित्यत्र। हेत्वभाववत्पक्षकत्वं स्वरूपासिद्ध-

त्वम्, यथा—ह्रदो वह्निमान् धूमादित्यत्र । साध्याप्रसिद्धाद्यन्यतमत्वं व्याप्यत्वासिद्धत्वम्, यथा—पर्वतः काञ्चनमयवह्निमानित्यत्रेति बोध्यम् ।

६८. प्रश्नः—नव्यमते किन्नामासाधारण्यम् ? तज्ज्ञानस्यानुमितौ तत्करणे वा कया रीत्या प्रतिबन्धकता ? बाधितविरुद्धयोर्लक्षणे लक्ष्ये कथं योजनीये ?

उत्तरम्—अथ नव्यमते हेतोः साध्यासामानाधिकरण्यमसाधारण्यम् । तथा च शब्दो नित्यः शब्दत्वादित्यत्र नित्यत्वासमानाधिकरणं शब्दत्वमिति हेतुनिष्ठासाधारण्यज्ञानस्य व्याप्तिघटकसामानाधिकरण्यग्रहप्रतिबन्धकतया अनुमितिकरणव्याप्तिज्ञाने प्रतिबन्धकता, न तु तस्यानुमितौ प्रतिबन्धकतेति बोध्यम् । एवं ह्रदो वह्निमान् धूमादित्यत्र वह्न्यभाववद्ध्रदात्मकबाधस्य वह्न्यभाववान् ह्रदो धूमश्चेति स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन धूमे सत्त्वात्तस्य बाधितत्वम् । तथा शब्दो नित्यः कृतकत्वादित्यत्र नित्यत्वव्यापकीभूताभावप्रतियोगित्वस्य कृतकत्वे सत्त्वात्तस्य विरुद्धतेति बोध्यम् ॥

६९. प्रश्नः—रत्नकोशकारमतं किम् ? कथञ्च तत् खण्डितं ग्रन्थकृता ?

उत्तरम्—अथ तदनुमितिं प्रति तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वे मानाभावात् सत्प्रतिपक्षस्य दूषकताबीजं संशयजनकतैव, नानुमितिप्रतिबन्धकतेति सत्प्रतिपक्षस्थले संशयाकारानुमितिर्भवत्येव । न च संशयानुमितिं प्रति उभयव्याप्यवत्तानिश्चयत्वेन हेतुताकल्पनाद्गौरवम्, क्लृप्ततत्तदभावानुमितिसामग्रीभ्यामेव तत्तदभावकोटिकसंशयानुमित्युत्पत्तेरिति रत्नकोशकृतः । तन्न युक्तम् । तदभावव्याप्यवत्ताज्ञाने सति तदुपनीतभानविशेषशाब्दबोधादेरनुदयात् लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतज्ज्ञानमात्रे तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकता लाघवात्, न तूपनीतभानविशेषे शाब्दबोधे च पृथक्प्रतिबन्धकता गौरवादिति प्रतिबन्धकसत्त्वात् संशयानुमितेरसंभवादिति दिक् ।

इति प्रत्यक्षानुमानखण्डप्रश्नोत्तरी समाप्ता ।

---

## अथोपमानखण्डम्

७०. प्रश्नः—अनुमानं निरूप्योपमाननिरूपणे का सङ्गतिः ? उपमानस्य लक्षणं स्वरूपञ्च किम् ? कथं कुत्र चोपमानाच्छक्तिग्रहः ? तत्र व्यापारः करणञ्च किम् ? उपमानस्य प्रमाणान्तरत्वे का युक्तिः ? उपमितेर्लक्षणं स्वरूपञ्च किम् ? सा चोपमितिः कथं कतिविधा ?

उत्तरम्—अथानुमानं निरूप्योपमाननिरूपणे अवसरो नाम सङ्गतिः। तथा हि—'नासङ्गतं प्रयुञ्जीते'त्यभियुक्तोक्त्या 'यद् यदनन्तरं निरूप्यं भवति, तत् तत्सङ्गतं भवती'ति व्याप्तौ फलितायाम् 'अनन्तराभिधानप्रयोजकजिज्ञासाजनकस्मरणप्रयोजकनिरूप्यनिष्ठसम्बन्धः सङ्गतिरि'ति लक्षणलक्षिता 'सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा। निर्वाहकैक्यकार्यैक्ये षोढा सङ्गतिरिष्यते' इत्याप्तोक्त्या षोढा सङ्गतिरभ्युपगम्यते। तत्रावसरः—प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्त्या अनन्तरवक्तव्यत्वरूपः। एवञ्च प्रकृते—प्रत्यक्षनिरूपणानन्तरं तदुपजीवकत्वाद् अनुमानोपमानयोरुभयोर्निरूपणे प्राप्तेऽपि अनुमानस्य बहुवादिसम्मतत्वेन निरसनीयाल्पवादिविप्रतिपत्तिकत्वात् सुगमतया तत्रैव शिष्यस्य प्रथमतो जिज्ञासा जायते, या चानुमानात् प्रागुपमाननिरूपणे प्रतिबन्धिका, कृते चानुमाननिरूपणे सा निवृत्तेति तदनन्तरवक्तव्यत्वमुपमानस्येत्यवसरसङ्गत्याऽनुमाननिरूपणानन्तरमुपमाननिरूपणमिति भावः।

उपमितिकरणत्वमुपमानस्य लक्षणम्। तस्य स्वरूपञ्च-क्वचिद् 'अयं गोसदृशः' इति, क्वचिच्च 'इयं जलादिविसदृशो' इति, साधर्म्यविशिष्टपिण्डप्रत्यक्षस्येव वैधर्म्यविशिष्टपिण्डप्रत्यक्षस्याप्युपमितौ करणत्वात्।

कस्यचिद्वनवासिनः 'गोसदृशो गवयपदवाच्यः' इत्यतिदेशवाक्यं श्रुत्वा तदर्थञ्च बुद्ध्वा कश्चिद् ग्रामीणो वनङ्गतो गवयं पश्यन् प्रथमम् 'अयं गोसदृशः' इति साक्षात्करोति, ततः 'गोसदृशो गवयपदवाच्यः' इत्यतिदेशवाक्यार्थं स्मरति, ततः 'गवयो गवयपदवाच्यः' इत्युपमिनोतीति रीत्योपमानाद् गवये गवयपदशक्तिग्रहः। एवमेव चोपमानात् पृथिव्यादावपि पृथिव्यादिपदशक्तिग्रहो बोध्यः। तत्र-अतिदेशवाक्यार्थस्मरणं व्यापारः, सादृश्यवैसादृश्यान्यतरविशिष्टपिण्डप्रत्यक्षजन्यत्वे सति तादृशप्रत्यक्षजन्योपमितिजनकत्वात्। एवञ्च तत्र—'अयं

गोसदृशः' इत्यादि सादृश्यवैसदृश्यान्यतरविशिष्टपिण्डप्रत्यक्षमुपमितौ करणम्, तादृशव्यापारवत्त्वे सत्युपमितित्वावच्छिन्नकार्यतानिरूपितकारणतावत्त्वात्।

ननूपमानं न प्रमाणान्तरं प्रत्यक्षादिप्रमितिविजातीयप्रमितिकरणत्वाभावात्। न चोपमितिः प्रत्यक्षादिविजातीयेति वाच्यम्, तत्र मानाभावादिति चेन्न; उपमितौ प्रत्यक्षादिविजातीयत्वस्य साधितत्वात्। तथा हि—उपमितिः किं प्रत्यक्षान्तर्भूता? उतानुमित्यन्तर्गता? अथवा शब्दान्तर्भूता? आहोस्वित् स्मृत्यन्तर्गता? तत्र—नाद्यः; उपमितेश्चक्षुरादिव्यापारविगमेऽप्युत्पादाच्चाक्षुषत्वाद्यसत्त्वेन, मानसोत्तरमनुत्पद्यमानाया उपमिनोमीति प्रतीतेर्विषयत्वान्मानसत्वाभावेन च प्रत्यक्षत्वासम्भवात्। न द्वितीयः, व्याप्त्यादिज्ञानमन्तराऽप्युदयात्। न तृतीयः, पदज्ञानाजन्यत्वात्। न च चतुर्थः, अननुभूतविषयकत्वात्। एवम् उपमित्यनन्तरं साक्षात्करोमि, अनुमिनोमि शाब्दयामि-स्मरामीत्यादिप्रतीत्यन्यतमस्याजायमानत्वाद्, उपमिनोमीति प्रतीतेरुत्पद्यमानत्वाच्चोपमितिप्रमितिः प्रत्यक्षादिप्रमितिविजातीयेति तत्करणत्वादुपमानं प्रमाणान्तरमित्याशयः।

सादृश्यवैसादृश्यान्यतरप्रकारकज्ञानत्वावच्छिन्नकरणतानिरूपितकार्यतावत्त्वे सति ज्ञानत्वम्, अथवा (यां काञ्चिदुपमितिव्यक्तिमादाय) तद्व्यक्तिवृत्ति-प्रत्यक्षासमवेत-जातिमत्त्वम् उपमितेर्लक्षणम्। तस्याः स्वरूपञ्च—'गवयो गवयपदवाच्यः' इति। केचित्तु—'अयं गवयपदवाच्यः' इत्याकारमेवोपमितेर्मन्यन्ते, किन्तु तन्न युक्तम्, तथा सति गवयान्तरे शक्तिग्रहाभावप्रसङ्गात्।

उपमितिर्द्विविधा, साधर्म्योपमितिवैधर्म्योपमितिभेदात्। तत्राद्या-साधर्म्यविशिष्टपिण्डप्रत्यक्षजन्या, या गवयपदवाच्यताग्रहरीत्योपपादिता। द्वितीया च वैधर्म्यविशिष्टपिण्डप्रत्यक्षजन्या, यथा—कश्चित्कस्यचिद् 'जलादिवैधर्म्यवती पृथिवीपदवाच्या' इत्यतिदेशवाक्यं श्रुत्वा तदर्थञ्च विज्ञाय कदाचित् पृथिवीं पश्यन् प्राग् 'इयं जलादिवैधर्म्यवती' इति साक्षात्करोति, ततः 'जलादिवैधर्म्यवती पृथिवीपदवाच्या' इत्यतिदेशवाक्यार्थं स्मरति, ततः 'पृथिवी पृथिवीपदवाच्या' इत्युपमिनोतीति दिक्॥

इत्युपमानखण्डम्।

---

## अथ शब्दलक्षणम्

**७१. प्रश्नः—उपमाननिरूपणानन्तरं शब्दप्रमाणनिरूपणे का सङ्गतिः? शब्दप्रमाणस्य किं लक्षणम्? शाब्दबोधस्य लक्षणम्प्रकारश्च कः? तत्र करणं व्यापारश्च कः?**

उत्तरम्—अथोपमाननिरूपणानन्तरं शब्दप्रमाणनिरूपणे उपजीव्योपजीवकभावो नाम सङ्गतिः। तथाहि—सादृश्यज्ञानात्मकोपमानजन्याया उपमितेः पदज्ञानरूपत्वेन शब्दप्रमाणरूपत्वात् स्वरूपत उपमानशब्दप्रमाणयोरुपजीव्योपजीवकभावः। एवं शाब्दबोधस्य शक्तिज्ञानात्मकोपमितिजन्यत्वात् तत्फलयोरप्युपजीव्योपजीवकभावः। अस्य कार्यकारणभावात्मकस्य सङ्गतित्वे—कारणे कार्ये वा ज्ञाते किमस्य कार्यं कारणं वेति-जिज्ञासोदयेनोपजीव्यत्वम् (उपजीवयतीत्युपजीव्यमिति व्युत्पत्त्या कारणत्वम्) उपजीवकत्वम् (उपजीवतीत्युपजीवकमिति व्युत्पत्त्या कार्यत्वम्) च द्वयमपि सङ्गतिरिति फलति। नन्वेवं 'सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा। निर्वाहकैक्यकार्यैक्ये षोढा सङ्गतिरिष्यते' इत्यभियुक्तोक्तेरसङ्गतिरापद्येतेति चेन्न, हेतुताया निरूपकतासम्बन्धेनाश्रयतासम्बन्धेन च सङ्गतित्वेन कारणतानिरूपकत्वात्मकस्य कार्यत्वस्य हेतुतायामेवान्तर्भावादिति बोध्यम्॥

आप्तवाक्यत्वं शब्दप्रमाणस्य लक्षणम्। तत्राप्तत्वं यथा—भूतार्थोपदेष्टृत्वम्, वाक्यत्वञ्च—आकाङ्क्षायोग्यतासन्निधिमत्पदसमूहत्वम्। पदज्ञानकरणकज्ञानत्वं शाब्दबोधस्य लक्षणम्। वस्तुतस्तु—यं कञ्चिच्छाब्दबोधमादाय तद्व्यक्तिवृत्तिप्रत्यक्षासमवेतजातिमत्त्वं तस्य लक्षणम्। एवञ्च—ज्ञानमात्रम्प्रति मनस एव करणत्वाभ्युपगमेऽपि न शाब्दबोधादिलक्षणानुपपत्तिः। शाब्दबोधप्रकारश्च—पदप्रतियोगिकार्थानुयोगिक-अर्थप्रतियोगिकपदानुयोगिक-शक्तिलक्षणाऽन्यतरात्मकवृत्तिरूपसम्बन्धज्ञानजनितसंस्कारस्य पदज्ञानेनोद्बोधेऽर्थस्मृत्या आसत्त्यादिज्ञानसत्त्वे शाब्दबोधो भवतीतिरूपको बोध्यः। तत्र (शाब्दबोधे)—पदज्ञानं मनो वा करणम्। ननु पदज्ञानापेक्षया ज्ञायमानपदमेव तत्र करणमस्त्विति चेन्न, तथा सति मौनिश्लोकस्थले द्वित्वादिबोधकविजातीयहस्तचेष्टास्थले च शब्दोच्चारणाभावेन ज्ञायमानपदभावाच्छाब्दबोधस्यानुपपत्तेः। पदज्ञानस्य तत्र करणत्वे तु—तत्रापि लिप्या हस्तचेष्टया च संकेतितपदज्ञानाच्छाब्दबोध उपपद्यते। न चाऽस्माकाशनिष्ठयोः शाब्दबोधज्ञायमानपदयोर्वैयधिकरण्यादेव कार्यकारणभावासम्भवात्कथन्तत्र सङ्गच्छेते शङ्कासमाधाने इति वाच्यम्, समवायेन

तयोर्वैयधिकरण्येऽपि कालिकेन सामानाधिकरण्यात् कार्यकारणभावस्य सम्भवेन तत्र शङ्कासमाधानयोः सङ्गतेः ॥ तत्र ( पदज्ञाने ) च—वृत्तिज्ञानसहकृतपदज्ञानजन्यार्थस्मरणं व्यापारः। तत्र—वृत्तिज्ञानसहकृतत्वानुपादाने घटादिपदात् समवायसम्बन्धेनाकाशस्मृतौ तस्यापि शाब्दबोधापत्तेः। न चार्थज्ञानमात्रं तत्र व्यापारः, तथा सति पदज्ञानवतः प्रत्यक्षादिनाऽर्थोपस्थितावपि शाब्दबोधापत्तेरिति बोध्यम् ॥

७२. प्रश्नः—का नाम वृत्तिः ? किन्तस्या लक्षणम् ? कतिविधा सा ? कथञ्च शक्तिज्ञानस्य सहकारितेति विविच्यताम्।

उत्तरम्—अथ शाब्दबोधौपयिकसम्बन्धो नाम वृत्तिः। शाब्दबोधजनकपदज्ञानजन्यपदार्थोपस्थितिजनकज्ञानविषय-पदपदार्थसम्बन्धत्वं तस्या लक्षणम्। अत्र पदज्ञानजन्यपदार्थेति स्पष्टार्थम्। सा द्विविधा, शक्तिलक्षणाभेदात्। नन्वेतद्विभजनमनुचितं, व्यञ्जनाया अपि भिन्नवृत्तित्वाद्, अन्यथा 'गच्छ गच्छसि चेत्कान्त ? पन्थानः सन्तु ते शिवाः। ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥' इत्यादौ तव गमनेन मम मरणं भविष्यतीत्यादिबोधस्यानुभवसिद्धस्यानुपपत्तिरिति चेन्न; तस्या अतिरिक्तवृत्तित्वकल्पनमपेक्ष्य तादृशवाक्यज्ञानस्य तत्तत्पदार्थस्मारकत्वकल्पने लाघवान्मनसैव तादृशबोधस्योपपत्तेः स्वीकर्तुमुचितत्वात् ॥ नन्वेकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति पदज्ञानादर्थोपस्थित्या शाब्दबोधसम्भवात्कथं शक्तिज्ञानस्य सहकारितेति चेन्न, हस्ति-हस्तिपकयोः सम्बन्धाज्ञाने हस्तिपकदर्शनेऽपि हस्तिनोऽस्मरणान्न सम्बन्धज्ञानमन्तरैकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति पदपदार्थयोः शक्तिरूपसम्बन्धज्ञाने सत्येव पदज्ञानात्पदार्थस्मरणं, न तु पदज्ञानमात्रेणेति शक्तिज्ञानस्य पदज्ञानसहकारिताया आवश्यकत्वात्। न च शक्तिज्ञानस्येव लक्षणाज्ञानस्यापि पदज्ञानसहकारित्वात्कथं ग्रन्थकृता शक्तिधिय एव तत्सहकारित्वमुक्तमिति वाच्यम्, शक्तिज्ञानाभावे शक्यसम्बन्धरूपलक्षणाग्रहस्याप्यसम्भवेन पदपदार्थयोः सम्बन्धज्ञानाभावात्पदजाने सत्यपि पदार्थस्मरणं न सम्भवतीत्यभिप्रायेणैव ग्रन्थकृता शक्तिज्ञानस्यैव पदज्ञानसहकारिताया उक्तत्वादिति बोध्यम्।

७३. प्रश्नः—प्राचीननवीनमताभ्यां शक्तिपदार्थो निरूप्यताम्।

उत्तरम्—अथ शक्तिः पदेन सह पदार्थस्य सम्बन्धः। सा चास्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपा। नन्वेवं विशेष्यतासम्बन्धेन घटपदबो-

ध्यत्वप्रकारकेच्छावत्त्वं घटपदशक्तिरित्यभ्युपगते—ईश्वरस्यानेकेच्छाकल्पने गौरवाद् घटपदाद् घटो बोद्धव्यः, पटपदात्पटो बोध्य इत्यादिसमूहालम्बनरूपाया ईश्वरैकेच्छाया एव शक्तित्वस्याङ्गीकरणीयतया तस्या घटपदबोध्यत्वप्रकारिकाया विशेष्यतासम्बन्धेन पटेऽपि सत्त्वात्तत्रापि घटपदशक्यत्वप्रसङ्गः। एवं तीरस्यापि गङ्गापदशक्यत्वप्रसङ्गाच्छक्त्यैव गङ्गापदेन तीरबोधोपपत्तेर्लक्षणोच्छेदापत्तिश्चेति चेन्न, तत्पदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छावत्त्वस्य तत्पदशक्तित्वाभ्युपगमेनेश्वरेच्छानिरूपितघटपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतायाः पटेऽसत्त्वात्तत्र घटपदशक्यत्वाप्रसङ्गात्। एवं तीरेऽपि गङ्गापदशक्यत्वाप्रसङ्गाद् गङ्गापदेन तीरबोधार्थं लक्षणायाः स्वीकर्तव्यत्वाच्च। नचैवमपि आधुनिकसङ्केतिते देवदत्तादिनाम्नि नदीवृद्धयादिसंज्ञायाञ्च शक्तिर्नोपपद्येतेति वाच्यम्, यत्र 'एकादशेऽहनि पिता नाम कुर्यादि' त्यादिश्रुतिरुपलभ्यते, तत्रैकादशाहादिकालिकपित्राद्युच्चारितशब्दजन्यबोधविषयः पित्रादिसङ्केतविशेष्यो भवत्वित्याकारकभगवदिच्छाकल्पनात्सामान्यत ईश्वरेण, विशेषतश्चाधुनिकपित्रादिना सङ्केतिते देवदत्तादिनाम्नि शक्तेरुपपत्तेः, यत्र च तादृशी श्रुतिर्नोपलभ्यते तत्राधुनिकमात्रसङ्केतिते नदीवृद्धयादिपदे शक्तिभ्रमेण लक्षणाग्रहेण वा बोधकताया उपपत्त्या शक्तेरस्वीकारादिति प्राचीनाः। नवीनास्तु—प्राचीनमते शक्तिभ्रमं लक्षणाग्रहञ्च विनाऽऽधुनिकमात्रसङ्केतितान्नद्यादिपदाद्, ईश्वरानङ्गीकर्तृप्राभाकरादीनामीश्वरेच्छारूपशक्तिग्रहासम्भवेन घटादिपदाच्च शाब्दबोधानुपपत्तेर्दुष्परिहरत्वाद् ईश्वरेच्छा न शक्तिः, किन्त्विच्छैव। तेनाधुनिकमात्रसङ्केतिते नद्यादिपदेऽपि शक्तिरस्त्येवेत्यभिप्रयन्ति। उभयमतेऽपि अपभ्रंशपदे शक्तिभ्रमादेव बोध इति बोध्यम्॥

७४. प्रश्नः—'शक्तिग्रहमि'ति कारिका सोदाहरणं व्याख्यायताम्।

उत्तरम्—अथ 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥' इति कारिका। अस्या इयं व्याख्या–वृद्धाः = विद्वांसः, शक्तिग्रहं वदन्ति, कस्मादित्याकाङ्क्षायामाह–व्याकरणेत्यादि। यथा—'भू सत्तायाम्, वर्तमाने लडि'त्यादिव्याकरणाद्धातुप्रत्ययादीनां शक्तिग्रहः। 'गोसदृशो गवयपदवाच्यः' इत्यादि-

वाक्यार्थस्मरणसहकृताद् 'अयं गोसदृशः' इत्यादि-प्रत्यक्षात्मकोपमानाद् 'गवयो गवयपदवाच्यः' इत्याद्युपमित्यात्मकः शक्तिग्रहः 'शम्भुरीशः पशुपतिरि'त्याद्यमर-कोशाच्छम्भ्वादिपदानां महादेवे शक्तिग्रहः । 'कोकिलः पिकशब्दवाच्यः' इत्याद्याप्तवाक्यात्पिकादिशब्दानां कोकिलादौ शक्तिग्रहः । 'घटं नय, गामानये'त्यादिवाक्यश्रवणस्य, तदनुसारिव्यवहारदर्शनस्य चानन्तरमूहापोहाभ्यां घटाद्यर्थेषु शक्तिं जानन्त्यज्ञातघटादिपदशक्तिकव्यक्तयः । 'वज्रहस्तः पुरन्दरः' इत्यादि-वाक्यशेषादिन्द्रादिपदानामिन्द्राद्यर्थेषु शक्तिबोधः । घटोऽस्तीत्यस्य कलशोऽस्तीत्यनेन विवरणात् तत्समानार्थकपदान्तरेण तदर्थकथनाद् घटपदस्य कलशरूपार्थे शक्तिग्रहः । न च शक्तिवाचकपदाभावाद्विवरणस्य कथं शक्तिग्राहकत्वमिति वाच्यम्, घटपदं कलशरूपार्थे शक्तं कलशात्मकार्थशक्तकलश-पदप्रतिपादितार्थप्रतिपादकत्वादित्यनुमानविधया तस्य शक्तिग्राहकत्वात् । 'इह सहकारतरौ मधुरं पिको रौती'त्यादौ सहकारादिप्रसिद्धार्थकपदस्य सान्निध्याच्च पिकशब्दस्य कोकिले शक्तिग्रहः । वस्तुत उक्तवाक्यादिहाम्रवृक्षे मधुर-शब्दकर्ता पिकपदवाच्य इत्येव बोधः, पिकशब्दस्य पूर्वं शक्तिग्रहाभावात् । कोकिलदर्शनानन्तरञ्च—कोकिलः पिकपदवाच्यः सहकारतरौ मधुररावकर्तृत्वादित्यनुमानादेव शक्तिग्रह इत्यवधेयम् ॥

७५ प्रश्नः—'धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवती'ति ग्रन्थार्थः कः ? वैयाकरणैराख्यातस्य शक्तिः क कथमभ्युपगम्यते ? कथं तन्नैयायिकैर्नानुमन्यते ? कथञ्च नैयायिकमते 'चैत्रेण पचती' त्यादि-प्रयोगो नापद्येतेति सोपपत्ति विविच्यताम् ।

उत्तरम्—अथ 'धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवती'ति ग्रन्थे– धातुप्रकृतीत्यस्य धातुप्रातिपदिकेत्यर्थः, प्रत्ययपदेन विभक्तितद्धितकृतां ग्रहणम्, आदिपदेन च समासादेः परिग्रहस्तत्रापि वैयाकरणैः शक्त्यङ्गीकारात् । तत्र–'भू सत्तायामि'त्यादि भ्वादिधातोः शक्तिग्राहकम्; पाचकादिप्रातिपदिकस्यापि व्याकरणाच्छक्तिग्रहः, पचादिधातोः पाकार्थकत्वस्य तदुत्तरकृत्प्रत्ययस्य कर्तृत्वाद्यर्थकत्वस्य च तत्र प्रतिपादनात्, 'वर्तमाने लडि'त्यादिप्रत्ययस्य शक्तिग्राहकम् । वस्तुतस्तु-धातुप्रकृतीत्यस्य धातुरूपप्रकृतीत्यर्थः, धातौ प्रकृतित्व-प्रदर्शनञ्च प्रत्ययतो वैलक्षण्यसूचनायैव । अत एवादिना समासादीनां संग्रहोऽपि सङ्गच्छते तेषामपि प्रातिपदिकत्वादिति भावः । प्राचीना वैयाकरणाः—

'लः कर्मणि च भावे चाकर्मकेभ्यः' इति–सूत्रानुसारेणाख्यातस्य कर्तरि शक्तिमभ्युपगच्छन्ति, तथा च 'चैत्रः पचती'त्यादौ चैत्राभिन्नैककर्तृकवर्तमानकालिकविक्लित्त्यनुकूलव्यापार इत्यादिबोधो भवति । नवीनास्ते तु–'फलव्यापारयोर्धातुराश्रये तु तिङः स्मृता' इति–कारिकाऽनुसारेणाख्यातस्याश्रये शक्तिं मन्यन्ते, तथा चोक्तस्थले चैत्राभिन्नैकाश्रयकवर्तमानकालिकविक्लित्त्यनुकूलव्यापार-इत्यादिबोधो जायते । नैयायिकास्तु–यद्याख्यातस्य कर्तरि शक्तिरभ्युपगम्येत, तर्हि कृतिमत्त्वात्मककर्तृत्वस्यानन्तकृतिस्वरूपत्वात्तस्य शक्यतावच्छेदकत्वे गौरवमापद्येत । एवं यदि तस्याश्रये शक्तिर्मन्येत तर्हि आधारत्वात्मकाश्रयत्वस्याननुगतस्वरूपसम्बन्धरूपत्वात्तस्य शक्यतावच्छेदकत्वे गौरवम्प्रसज्येतेति जात्यात्मककृतित्वस्यैकत्वात्तस्य शक्यतावच्छेदकत्वे लाघवात्कृतावेवाख्यातस्य शक्तिरभ्युपगन्तव्या । तथा च तत्र वर्तमानकालिकविक्लित्त्यनुकूलव्यापारानुकूलकृतिमानेकत्वावच्छिन्नश्चैत्र इत्यादिबोधो भवतीत्यभिप्रयन्ति । ननु नैयायिकमते 'चैत्रः पचती'त्यादौ कर्तुरनभिधानाद् 'अनभिहिते' इत्यधिकारीयेण 'कर्तृकरणयोस्तृतीया' इत्यनेन चैत्रादिपदात्तृतीयाऽऽपद्येतेति चेन्न, कर्तृगतसंख्याऽनभिधानस्य तृतीयाप्रयोजकत्वात्तत्र तत्संख्याऽभिधानेन तदापत्त्यसम्भवादिति दिक् ॥

७६ प्रश्नः—'संख्याऽभिधानयोग्यश्च-कर्मत्वाद्यनवरुद्धः प्रथमान्तपदोपस्थाप्यः' इति ग्रन्थः सावतरणं सपदकृत्यञ्च व्याख्यायताम् ।

उत्तरम्—अथ नैयायिकमतेन कृतावाख्यातस्य शक्तिस्वीकारे 'चैत्रस्तण्डुलं पचती'त्यादौ कर्तुराख्यातेनानभिधानात्प्रसज्यमानायाश्चैत्रादिपदात्तृतीयायाः कर्तृगतसंख्याऽनभिधानं प्रयोजकमभ्युपेत्य वारणे कृतेऽपि-तत्र चैत्रादिगतैव संख्याऽऽख्यातेनाभिधीयते न तु तण्डुलादिगतेत्यत्र नियामकाभावे 'चैत्रेण तण्डुलः पच्यते' इत्यादावपि तेन चैत्रादिगतसंख्याया अभिधानसम्भावात्तृतीया नोपपद्येतेति शङ्कायां कर्तृगतसंख्याऽभिधानस्य प्रयोजकं दर्शयति—'संख्याऽभिधानयोग्यश्चे'ति ।

तत्र कर्मत्वाद्यनवरुद्धत्वं यदि द्वितीयाऽऽदिकारकविभक्त्यर्थाविशेषणत्वं तर्हि 'चैत्र इव मैत्रो गच्छती'त्यादौ चैत्रस्येवार्थसादृश्यविशेषणत्वेऽपि तादृशकारकविभक्त्यर्थाविशेषणत्वादाख्यातार्थसंख्याया मैत्र इव चैत्रेऽप्यन्वय आप-

द्येत । यदि कर्मत्वाद्यनन्वितत्वं तत्त्वं तदा 'पक्वमन्नं भुज्यते' इत्यादौ पाक-कर्मत्वान्वितेऽन्ने आख्यातार्थसंख्याया अन्वयो नोपपद्येत । यद्यविशेषणत्वं तत्त्वन्तर्हि यत्र 'चैत्र इव मैत्रो गच्छती'त्यादौ खले कपोतन्यायेन बोधस्तत्र चैत्रीयं सादृश्यमित्यवान्तरवाक्यार्थबोधस्य शाब्दबोधात्पूर्वमभावादविशेषण-त्वस्य चैत्रेऽपि सत्त्वात्तत्रापि मैत्र इवाख्यातार्थसंख्याया अन्वयः प्रसज्येत । यदि च विशेषणत्वतात्पर्याविषयत्वं तत्त्वन्तदा—'चैत्र एव पचती'त्यत्रैवकारार्थे, 'चैत्रश्चैत्रं पश्यती'त्यत्र च द्वितीयार्थे चैत्रस्य विशेषणत्वात्तत्र तत्संख्याऽन्वयो नोपपद्येत । अतो विशेषणत्वमात्रेण तात्पर्याविषयत्वं, विशेषणत्वमात्रप्रयोजक-प्रथमान्ततत्तत्पदानुपस्थाप्यत्वं वा तत्त्वम् । तथा च—'चैत्र इव मैत्रो गच्छती'-त्यादौ चैत्रे तत्संख्याऽन्वयवारणाय कर्मत्वादीत्यादि । 'चैत्रेण सुप्यते' इत्यादौ च धात्वर्थस्वापे तत्संख्यान्वयवारणाय प्रथमान्तेत्यादीति बोध्यम् ।

७७ प्रश्नः—'यद्वा धात्वर्थातिरिक्ताविशेषणत्वं प्रथमदलार्थः' इति ग्रन्थोत्थाने किं बीजम् ? अत्र—धात्वर्थविशेषणत्वमित्यनभिधाय धात्व-र्थातिरिक्ताविशेषणत्वमित्यभिधाने किं प्रयोजनम् ? प्रथमदलपदेन च कस्य ग्रहणम् ? कथमत्र कल्पे 'चैत्र एव पचती'त्यादौ चैत्रे संख्यान्व-योपपत्तिः ? किञ्च तादृशदलद्वयोपादानप्रयोजनमिति समीक्ष्यताम् ।

उत्तरम्—अथ 'संख्याभिधानयोग्यश्च कर्मत्वाद्यनवरुद्धः प्रथमान्तपदोप-स्थाप्यः' इत्यत्र प्रथमान्तेत्यादिद्वितीयदलोपादानस्य प्रकारान्तरेण प्रयोजनस्य 'स्तोकं पचती'त्यादौ क्रियाविशेषणे स्तोकादावाख्यातार्थसंख्यान्वयवारणरूपस्य कथनमेव प्रकारान्तरेण कर्मत्वादीति प्रथमदलार्थकथनरूपस्य 'यद्वा धात्वर्थाति-रिक्ताविशेषणत्वं प्रथमदलार्थः' इति ग्रन्थस्योत्थाने बीजम् । अत्र यदि गौरवावहं 'धात्वर्थातिरिक्ताविशेषणत्वमित्यपहाय लाघवावहं धात्वर्थविशेषणत्वमित्यभि-धीयेत तर्हि 'रामो गच्छती'त्यादौ रामादेर्मुख्यविशेष्यत्वेनैव भानाद्धात्वर्थविशेष-णत्वस्याभावात्तत्राख्यातार्थसंख्यान्वयो नोपपद्येत, अत एव लाघवास्पदमपि 'धा-त्वर्थविशेषणत्वमि'त्यपहाय गौरवास्पदमपि 'धात्वर्थातिरिक्ताविशेषणत्वमि'त्य-भिहितम् । तथा च तत्र रामादौ विशेषणत्वसामान्याभावात्तत्संख्याऽन्वयः समुपपद्यते । 'यद्वा धात्वर्थातिरिक्ताविशेषणत्वं प्रथमदलार्थः' इत्यत्र प्रथम-दलपदेन 'संख्याऽभिधानयोग्यश्च कर्मत्वाद्यनवरुद्धः प्रथमान्तपदोपस्थाप्यः' इति

ग्रन्थघटकस्य 'कर्मत्वाद्यनवरुद्धः' इत्यंशस्य ग्रहणम्। ननु धात्वर्थातिरिक्ता-विशेषणत्वस्य तादृशप्रथमदलार्थत्वे 'चैत्र एव पचती'त्यादौ चैत्रे तत्संख्यान्वयो नोपपद्येत, तत्र धात्वर्थातिरिक्तैवकारार्थविशेषणत्वस्य सत्त्वादिति चेन्न, धात्व-र्थातिरिक्ताविशेषणत्वशब्देन धात्वर्थातिरिक्ताविशेषणत्वमात्रेण तात्पर्याविषय-त्वस्य विवक्षणात्तत्र चैत्रस्य तादृशविशेषणत्वेऽपि मुख्यविशेष्यत्वेनापि भाना-द्धात्वर्थातिरिक्तविशेषणत्वमात्रेण तात्पर्यविषयत्वस्य तत्राभावादाख्यातार्थ-संख्याऽन्वयोपपत्तेः। 'यद्वा धात्वर्थे'त्यादिकल्पे—'चैत्र इव मैत्रो गच्छती'त्यादौ धात्वर्थातिरिक्तेवार्थसादृश्यविशेषणत्वमापन्ने प्रथमान्तपदोपस्थाप्ये चैत्रादावाख्यातार्थसंख्याऽन्वयवारणाय तादृशार्थकं कर्मत्वादीत्यादि प्रथम-दलमुपापादि। तथा 'स्तोकं पचती'त्यादौ द्वितीयान्तपदोपस्थाप्ये धात्वर्थमात्र-विशेषणत्वमापन्ने स्तोकादौ तत्संख्याऽन्वयवारणाय प्रथमान्तेत्यादि द्वितीयदलं प्रत्यपादीति दिक्॥

७८ प्रश्नः—कार्यान्वितघटादिषु घटादिपदानामानुभाविकी शक्ति-रिति प्रभाकरमतमुपपाद्य निरस्यताम्। तथा—अन्वितघटादिषु घटा-दिपदानां तादृशी शक्तिरिति भट्टमतम्प्रतिपाद्य निराक्रियताम्।

उत्तरम्—अथ प्राभाकराः—अर्थे पदानां शक्तिर्द्विविधा, स्मारकानुभावक-भेदात्। तत्र घटादिपदानां—स्मारिका शक्तिः कार्यानन्विते घटादावेव, अत एव घटादिपदात्केवलघटादिस्मरणमुपपद्यते। आनुभाविकी तु कार्यान्वितघटा-दावेव, सा च व्यवहारेण ज्ञायते। तथा हि—प्रेरकव्युत्पन्नेनोक्तं घटमान-येत्यादि श्रुत्वा प्रेर्यव्युत्पन्नेन सम्पादितं घटानयनादि दृष्ट्वा समीपस्थोऽज्ञात-घटादिपदशक्तिकजिज्ञासुः घटानयनादिरूपं कार्यं घटमानयेत्यादिशब्दप्रयोज्य-मित्यवधारयति; ततश्च घटं नय, गामानयेत्यादिवाक्यश्रवणस्य, तदनुसारिव्यव-हारदर्शनस्य चानन्तरमूहापोहाभ्यां घटादिपदानां कार्यान्वितघटादौ शक्तिं गृह्णाति। एवञ्च लाघवात् साक्षात्परम्परया वा कार्यत्वान्वित (घटादि) विषयक-शाब्दत्वावच्छिन्नम्प्रति (घटादि) पदं कारणमिति सामान्यकार्यकारणभावः पर्य-वसित इति वदन्ति। तन्न युक्तम्। कार्यत्वान्वित (घटादि) विषयकशाब्दत्वापे-क्षया (घटादि) विषयकशाब्दत्वस्य कार्यतावच्छेदकत्वे लाघवात् 'चैत्र! पुत्रस्ते जातो मृतश्चे' त्यादिशब्दश्रवणानन्तरजायमानमुखप्रसादमालिन्यानुमितसुख-

दुःखकारणीभूतबोधस्य कार्यत्वाविषयकस्यैव तादृशपदैर्जननाद् (घटादि) पदैः कार्यताविषयक एव बोधो जन्यत इति नियमे व्यभिचाराच्च । तथा च घटादिपदानां न कार्यान्वितघटादौ शक्तिरिति बोध्यम् ॥

भट्टास्तु—शाब्दबोधे पदानुपस्थितार्थभानोपगमे घटोऽस्तीत्यादितः पटादिविषयकोऽपि शाब्दबोध आपद्येतेति पदोपस्थितार्थ एव शाब्दबोधे भासत इति नियमोऽभ्युपेयः । तथा च पदार्थद्वयसम्बन्धस्य पदानुपस्थाप्यत्वे तादृशनियमो भज्येतेति पदान्तरलभ्यं यदितरत् तत्प्रतियोगिकत्वोपलक्षितसंसर्गविशिष्टघटादौ घटादिपदानां शक्तिः । एवञ्च-इतरान्वितघटादिविषयकशाब्दत्वावच्छिन्नम्प्रति घटादिपदं कारणमिति सामान्यकार्यकारणभावः पर्यवसित इति वदन्ति । तन्न युक्तम् । घटादिविषयकशाब्दत्वापेक्षयेतरान्वितघटादिविषयकशाब्दत्वस्य कार्यतावच्छेदकत्वे गौरवात् । नन्वेवं घटोऽस्तीत्यादितः पटादिविषयकशाब्दबोध आपद्येतेति चेन्न, संसर्गताभिन्नतत्तन्निष्ठविषयताशालिशाब्दत्वावच्छिन्नम्प्रति पदजन्यतत्तद्विषयकोपस्थितेर्हेतुत्वात् । संसर्गस्तु—शाब्दबोधे पदद्वयसमभिव्याहाररूपाकाङ्क्षालभ्य एव भासत इति न तत्रानियमः । तथा च–'अनन्यलभ्यः शब्दार्थः' इति न्यायान्न संसर्गे शक्तिरिति घटादिपदानां घटादिमात्रे शक्तिरित्यवधेयम् ॥

७९. प्रश्नः—पदानां जातावेव शक्तिरिति मीमांसकमतमुपपाद्य खण्डयता नैयायिकमते कुत्र तेषां शक्तिरित्युपपाद्यताम् ।

उत्तरम्—अथ मीमांसकाः—पदस्य जातिविशिष्टव्यक्तौ शक्तिस्वीकारे जातावपि शक्तेरावश्यकता, 'नागृहीतविशेषणा बुद्धिर्विशिष्टेषूपजायते' इति न्यायात् । तथा च जातावेव शक्तिर्न तु व्यक्तौ, व्यभिचाराद् गौरवाच्च । तथा हि–यत्किञ्चिद्व्यक्तौ शक्तिः, सकलव्यक्तिषु वा ? तत्र—नाद्यः, तथा सति अज्ञातशक्तिकव्यक्तिविषयकस्यापि शाब्दबोधस्योदयेन व्यतिरेकव्यभिचारात् 'तद्विषयकशाब्दबोधम्प्रति तद्धर्मिकशक्तिज्ञानं कारणमि'ति कार्यकारणभावस्यानुपपत्त्या घटादिपदात्पटादिशाब्दबोध आपद्येत । न चान्त्यः, तथा सति व्यक्तीनामानन्त्येन शक्तीनामप्यानन्त्यम्प्रसज्येतेति शुद्धैकजातावेकशक्तिकल्पनमपेक्ष्य जातिविशिष्टनानाव्यक्तिषु नानाशक्तिकल्पने गौरवात् । अत एव 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इत्याद्युक्तिरपि सङ्गच्छते । नन्वेवं

४ मु० त०

शाब्दबोधे व्यक्तिर्न भासतेति चेन्न, व्यक्तिविशेष्यकजातिप्रकारकशाब्दबोधम्प्रति । जातिविशेष्यकशक्तिज्ञानस्य कारणत्वादित्यभिप्रयन्ति । तन्न युक्तम् । पदस्य जातावेव शक्तिस्वीकारे जातिपदयोरेव सम्बन्धग्रहेण पदरूपैकसम्बन्धिज्ञानाज्जातिरूपसम्बन्ध्यन्तरमेव स्मिर्येत न तु व्यक्तिरिति पदजन्यव्यक्तिस्मरणाभावेन तद्विषयकशाब्दबोधम्प्रति पदजन्यतद्विषयकोपस्थितेर्हेतुतया च शाब्दबोधे व्यक्तेर्भानासम्भवाद्व्यक्तौ शक्तेरावश्यकत्वात् । ननु व्यक्तौ पदस्य शक्तेरभावोऽपि लक्षणायाः स्वीकारेण पदजन्यव्यक्तिस्मरणसम्भवान्न काप्यनुपपत्तिरिति चेन्न, 'गामानये' त्यादौ गोत्वजातेरानयनाद्यन्वयानुपपत्त्या गोपदस्य गवि लक्षणाऽङ्गीकारेऽपि 'गौरस्ती' त्यादौ गोत्वजातेरस्तित्वाद्यन्वयानुपपत्तेर्लक्षणाबीजस्याभावेन लक्षणायाः स्वीकर्तुमशक्यत्वात् । न च सकलव्यक्तिषु शक्तिस्वीकारे गौरवम्, सर्वव्यक्तिषु पदस्यैकस्या एव शक्तेः स्वीकारात् । यदि च गोत्वे शक्तिस्तर्हि गवेतरासमवेतत्वविशिष्टसकलगोसमवेतत्वात्मकगोत्वत्वरूपशक्यतावच्छेदकेऽनन्तगोव्यक्तीनां प्रवेशेन मीमांसकमत एव गौरवमापद्येत । एवञ्च जात्याकृतिविशिष्टव्यक्तिबोधानुपपत्त्या कल्प्यमाना शक्तिर्जात्याकृतिविशिष्टव्यक्तावेव सिद्धयति । अत एव 'जात्याकृतिव्यक्तयः पदार्थः' इति गौतमसूत्रमपि सङ्गच्छत इति ॥

**८०. प्रश्नः—पदस्य किं लक्षणम् ? कति तस्य भेदाः ? कानि च तेषां स्वरूपाणि सोदाहरणानीति प्रतिपाद्यताम् ।**

**उत्तरम्**—अथ शक्तिमत्त्वं पदस्य लक्षणम् । तस्य चत्वारो भेदाः = यौगिक-रूढ-योगरूढ-यौगिकरूढरूपाः । तत्र—समुदायशक्तिनिरपेक्षया योगापरपर्याययाऽवयवशक्त्या बोधकं पदं यौगिकम् । यथा पाचकादि पदम्, तद्धि ( पचादिधात्वर्थं ) पाकादि ( ण्वुलादिप्रत्ययार्थ ) कर्तारं बोधयति । एवम्—अवयवशक्तिनिरपेक्षया रूढ्यपरपर्यायया समुदायशक्त्या बोधकं पदं रूढम् । यथा गवादि पदम् । तद्धि-गमनकर्त्राद्यर्थं विहाय सास्नावन्तं प्राणिनं बोधयति । तथा योगरूढिरूपमिलितशक्त्यपरपर्यायया अवयवशक्तिसापेक्षसमुदायशक्त्या बोधकं पदं योगरूढम् । यथा पङ्कजादि पदम् । तद्धि अवयवशक्त्या पङ्कजनिकटरूपमर्थं, समुदायशक्त्या च तदभिन्नं पद्मत्वरूपेण पद्मं बोधयति । यत्र कुमुदादौ पद्मत्वस्य बाधस्तत्रावयवशक्तिमात्रेण, यत्र च स्थलपद्मादाववय-

चार्थस्य बाधस्तत्र समुदायशक्तिमात्रेण पङ्कजपदेन क्रमशः पङ्कजनिकर्तृत्वेन पद्मत्वेन च रूपेण तत्तद्बोधो भवति। एवं–समुदायशक्तिनिरपेक्ष–योगापरपर्यायया ऽवयवशक्त्याऽर्थान्तरस्य, अवयवशक्तिनिरपेक्षरूढ्यपरपर्यायया समुदायशक्त्या चार्थान्तरस्य बोधकं पदं यौगिकरूढम्। यथा–उद्भिदादि पदम्। तद्धि–'उद्भिदस्तरुगुल्माद्याः' इत्यादौ अवयवशक्त्योद्भेदनकर्तॄन् तरुगुल्मादीन्, 'उद्भिदा यजेत पशुकामः' इत्यादौ च समुदायशक्त्योद्भिन्नामकं यागविशेषं बोधयतीति दिक्॥

८१. प्रश्नः–लक्षणायाः स्वरूपं किम्? किन्तस्या बीजम्? कति तस्या भेदाः? कानि च तेषां स्वरूपाणि सोदाहरणानीति प्रतिपाद्यताम्।

उत्तरम्—अथ शक्यसम्बन्धो लक्षणायाः स्वरूपम्। तस्या बीजन्तात्पर्यानुपपत्तिरेव। नन्वन्वयानुपपत्तिरेव लक्षणाया बीजमस्त्विति चेन्न, तथा सति 'यष्टीः प्रवेशये'त्यादौ यष्टिषु प्रवेशान्वयस्यानुपपत्तेरभावाद् यष्टिपदस्य यष्टिधरे लक्षणाया अनुपपत्तेः, 'गङ्गायां घोषः' इत्यादौ च कस्यापि कुत्रापि लक्षणयाऽन्वयस्योपपत्तेः क्व गङ्गापदस्य तीरे, क्व च घोषपदस्य मत्स्यादौ लक्षणेत्यस्य व्यवस्थाया अनुपपत्तेः। तात्पर्यानुपपत्तेर्लक्षणाबीजत्वे तु 'यष्टीः प्रवेशये'त्यादौ यष्टिप्रवेशे भोजनतात्पर्यानुपपत्त्या यष्टिपदस्य यष्टिधरे लक्षणोपपद्यते, 'गङ्गायां घोषः' इत्यादौ च गङ्गापदस्य तीरतात्पर्यग्रहस्थले तीरे, घोषपदस्य च मत्स्यादितात्पर्यज्ञानस्थले मत्स्यादौ लक्षणेति व्यवस्थोपपद्यते। लक्षणा द्विविधा–अलक्षितलक्षणा, लक्षितलक्षणा च। तत्राद्या त्रिविधा–जहत्स्वार्था, अजहत्स्वार्था, जहदजहत्स्वार्था च। तत्र—जहत् स्वार्थो (लक्षकशक्यार्थो) यया सा जहत्स्वार्था, यथा–'गङ्गायां घोषः' इत्यादौ गङ्गाऽऽदिपदस्य तीरादौ लक्षणा जहत्स्वार्था, सा हि लक्षकगङ्गाऽऽदिपदशक्यार्थप्रवाहाद्यविषयकलक्ष्यार्थतीरादिविषयकशाब्दबोधजनिका। तथा–अजहत् स्वार्थो यया सा अजहत्स्वार्था, यथा–'काकेभ्यो दधि रक्ष्यतामि'त्यत्र काकपदस्य दध्युपघातके लक्षणा अजहत्स्वार्था, सा हि–दध्युपघातकत्वेन रूपेण काकं मार्जारादींश्च बोधयति, सर्वतो दधिरक्षायास्तात्पर्यविषयत्वात्। एवं–जहदजहतौ स्वार्थौ यया सा जहदजहत्स्वार्था, यथा–'स एवायं साधुरि'त्यत्र तदिदम्पदयोः साधुमात्रे लक्षणा जहदजहत्स्वार्था, सा हि–तत्पदवाच्येन तद्देशतत्कालवृत्तित्व-

विशिष्टसाधुना सहेदम्पदवाच्यस्यैतद्देशैतत्कालवृत्तित्वविशिष्टसाधोरभेदान्वयस्य विशेषणभेदेनासम्भवादुभयत्र विशेषणांशं विहाय विशेष्यांशमात्रं बोधयति । लक्षितलक्षणा तु स्ववाच्यरेफद्वयादिघटितपदवाच्यत्वादिरूपा । यथा—'मधु पिबति द्विरेफः' इत्यत्र द्वौ रेफौ यत्रेति व्युत्पत्तिनिष्पन्नद्विरेफपदशक्यरथकारादिबोधे सति तात्पर्यस्य मधुपविषयकस्यानुपपत्त्या द्विरेफपदं स्ववाच्यरेफद्वयघटितभ्रमरपदवाच्यत्वरूपलक्षितलक्षणया भ्रमरं बोधयतीति दिक् ।

८२. प्रश्नः—'लाक्षणिकं पदं नानुभावकमि'ति वाक्यस्य तात्पर्यमुपपाद्य निरस्यताम् ।

उत्तरम्—अथ शक्तपदज्ञानं शक्यार्थस्य स्मारकं शब्दानुभवजनकञ्च; लाक्षणिकपदज्ञानन्तु लक्ष्यार्थस्य स्मारकमेव, न तु शाब्दानुभवजनकम् । नन्वेवं शाब्दबोधे लक्ष्यार्थस्य भानं कथमुपपद्येतेति चेन्न, शक्यलक्ष्यान्यतरपदार्थान्विततच्छक्यार्थशाब्दबोधम्प्रति तच्छक्तपदज्ञानस्य हेतुतया शाब्दबोधे तच्छक्यार्थान्वयिनो लाक्षणिकार्थस्य लक्षकपदसमभिव्याहृततच्छक्तपदज्ञानेनैव भानस्योपपत्तेरित्याशयेनैव वदन्ति प्राचीनाः 'लाक्षणिकं पदं नानुभावकमि'ति । तन्न युक्तम् । तथा सति 'कुमतिः पशुरि'त्यादितः सकललक्षकपदकवाक्यादनुभवसिद्धस्य शाब्दबोधस्यानुपपत्तेः । तथा हि—तत्र कुत्सिता मतिर्यस्य स कुमतिरितिबहुव्रीहिनिष्पन्नकुमतिशब्दे उत्तरपदस्य कुत्सितज्ञानवति लक्षणा पूर्वपदस्य च तात्पर्यग्राहकता, कुमतौ च पशुत्वस्य बाधितत्वात्पशुपदस्य पशुसदृशे लक्षणा; एवञ्च तत्र शक्तपदस्याभावाच्छाब्दबोधो नोपपद्येतेति तस्योपपत्तये लाक्षणिकपदस्याप्यनुभावकताऽवश्यं स्वीकार्येति नवीना अभिप्रयन्तीति दिक् ॥

८३. प्रश्नः—"गभीरायां नद्यां घोषः' इत्यत्र कस्य कस्मिंश्च लक्षणेति विषये मीमांसकमतं सोपपादनं निरस्य नैयायिकमतं प्रतिपाद्यताम् ।

उत्तरम्—अथ मीमांसकाः—स्वबोध्यसम्बन्ध एव लक्षणा, न तु शक्यसम्बन्धः । एवञ्च—'गङ्गायां घोषः' इत्यत्र गङ्गापदबोध्यप्रवाहसम्बन्धस्य तीरे सत्त्वाद् गङ्गापदस्य तीरे लक्षणा, 'गभीरायां नद्यां घोषः' इत्यत्र तु गभीरायां नद्यामितिवाक्यबोध्यगभीराभिन्ननदीसम्बन्धस्य तीरे सत्त्वात्तादृशवाक्यस्य तादृशनदीतीरे लक्षणेति वदन्ति । तन्न युक्तम् । स्वबोध्यत्वस्य हि स्वजन्यशाब्दबोधविषयत्वरूपत्वे 'गङ्गायां घोषः' इत्यत्र गङ्गापदस्य तीरे लक्षणा नोप-

पद्येत, तत्र गङ्गापदेन प्रवाहशाब्दबोधाजननात्प्रवाहस्य गङ्गापदबोध्यत्वाभावादिति शक्त्या स्वजन्यस्मृतिविषयत्वं स्वबोध्यत्वं वाच्यम्, एवञ्च शक्त्यभावान्न वाक्यस्य लक्षकत्वम्, न च शक्यसम्बन्धापेक्षया गुरोः स्वबोध्यसम्बन्धस्य लक्षणात्वम् । किञ्च तत्र गभीरनदीतीरे गभीरायां नदीति-सप्तमीशून्यभागस्य लक्षणा वा गभीरायां नद्यामिति सप्तम्यन्तस्य ? तत्र नाद्यः, तथा सति सप्तम्यर्थाधेयत्वे तादृशतीरस्यान्वयानुपपत्तेः, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमाद् गभीरायां नदीतिभागस्य च सप्तमीप्रकृतित्वाभावात् न च द्वितीयः, तथा सति नामार्थयोर्भेदसम्बन्धेनान्वयस्याव्युत्पन्नत्वादाधेयतासम्बन्धेन तादृशतीरस्य घोषेऽन्वयासम्भवात् । नैयायिकास्तु-शक्यसम्बन्धस्य लक्षणात्वेन वाक्यस्य न लक्षकता, तस्य शक्याप्रसिद्धेः । तथा च -'गभीरायां नद्यां घोषः' इत्यत्र नदीपदस्य नदीतीरे लक्षणा, गभीरपदार्थस्य च नद्या सहाभेदान्वयः, 'चैत्रस्य गुरुकुलमि'त्यादावेकदेशान्वयस्य स्वीकृतत्वात् । यदि चात्रैकदेशान्वयो नाभ्युपगम्यते, तर्हि नदीपदस्य गभीरनदीतीरे लक्षणा, गभीरपदञ्च तात्पर्यग्राहकमित्यभिप्रयन्तीति बोध्यम् ॥

८४. प्रश्नः—चित्रगुरित्यादिबहुव्रीहौ, राजपुरुष इत्यादि तत्पुरुषे च कस्य कुत्र कुतश्च लक्षणेति निरूप्यताम् ।

उत्तरम्—अथ चित्रा गौर्यस्येति विग्रहवाक्येन यत्स्वामिकचित्राभिन्नो गौरिति बोधाद् 'बहुव्रीहिसमासे विग्रहवाक्याद्यादृशविशेष्यविशेषणभावापन्नार्थबोधो भवति समासवाक्यात्तद्विपरीतविशेष्यविशेषणभावापन्नार्थबोधः' इति नियमेन चित्रगुरितिसमासवाक्याच्चित्राभिन्नगोस्वामी ( यः ) इति बोधस्योपपत्त्यै चित्रपदस्य चित्राभिन्ने गोपदस्य च गोस्वामिनि लक्षणास्वीकारे पदद्वये लक्षणा प्रसज्येत, 'बहुव्रीहावुत्तरपद एव समासप्रयुक्तलक्षणे'तिनियमश्च भज्येतेत्येकदेशान्वयपक्षे गोपदस्य गोस्वामिनि लक्षणा, गवि च चित्रपदार्थस्याभेदेनान्वयः । एकदेशान्वयाभावपक्षे तु गोपदस्य चित्राभिन्नगोस्वामिनि लक्षणा, चित्रपदञ्च तात्पर्यग्राहकमिति बोध्यम् ।

राजपुरुष इत्यादितत्पुरुषे राजादिपूर्वपदस्य राजसम्बन्ध्यादौ लक्षणा, तस्य च पुरुषादावभेदसम्बन्धेनान्वयः । ननु तत्र राजादिपदार्थस्य स्वत्वसम्बन्धेन पुरुषादिपदार्थेऽन्वयेनैव निर्वाहे लक्षणाऽनुसरणं व्यर्थमिति चेन्न, अव्ययाति-

रिक्तनामार्थयोरभेदातिरिक्तिसम्बन्धेनान्वयबोधस्याव्युत्पन्नत्वात् । अन्यथा राजा पुरुष इत्यादावप्यभेदातिरिक्तसम्बन्धेनान्वयबोधः प्रसज्येत । न च राजपुरुषादिपदे लुप्तषष्ठ्याः स्मरणं कल्प्यमिति तस्मारितस्वत्वसंसर्गेणैव राजादेः पुरुषादावन्वयात्तद्व्युत्पत्त्यविरोधेन सामञ्जस्यमिति वाच्यम्, अस्मृतविभक्तिकव्यक्तेरपि तादृशपदेन बोधोदयादिति ।

८५. प्रश्नः—इतरेतरद्वन्द्वे साहित्ये लक्षणेतिमीमांसकमतमुपपाद्य निरस्यताम्, व्यवस्थाप्यताञ्च स्वमते तत्र विनैव लक्षणां निर्वाहः ।

उत्तरम्—अथ धवखदिरावितीतरेतरद्वन्द्वे धवत्वं खदिरत्वञ्च प्रत्येकं नोद्देश्यतावच्छेदकम्, यतस्तथा सति–आकाशावित्यादिवाक्यस्य प्रामाण्यं वारयितुं सुपामुद्देश्यतावच्छेदकव्याप्यसंख्याबोधकत्वस्य स्वीकृतत्वाद्धवद्वयं खदिरद्वयञ्च प्रतीयेत । परन्तु खदिरपदस्य धवखदिरसाहित्याश्रये लक्षणाया धवपदस्य च तात्पर्यग्राहकताया उपगमेन धवखदिरसाहित्यमेवोद्देश्यतावच्छेदकम्, तथा चोद्देश्यतावच्छेदकीभूततादृशसाहित्यव्याप्यत्वं न धवद्वयवृत्तिद्वित्वस्य न च खदिरद्वयवृत्तिद्वित्वस्य, अपि तु धवखदिरोभयवृत्तिद्वित्वस्यैवेति न धवद्वयस्य खदिरद्वयस्य च बोधापत्तिरिति मीमांसका वदन्ति । तन्न युक्तम् तत्र हि साहित्यम्—एकदेशवृत्तित्वम्, एकशक्त्युपस्थाप्यार्थान्वयित्वं वा ? तत्र नाद्यः, गोत्वाश्वत्वे पश्येत्यत्रैकदेशवृत्तित्वाभाववतोरपि गोत्वाश्वत्वयोर्द्वन्द्वदर्शनात् । न च द्वितीयः, धवे दर्शनस्य खदिरे च छेदनस्य तात्पर्येण प्रयुक्ते धवखदिरौ पश्य छिन्धीत्यत्रैकशक्त्युपस्थाप्यार्थान्वयित्वाभाववतोरपि धवखदिरयोर्द्वन्द्वदर्शनात् । इतरेतरद्वन्द्वे लक्षणाया अभावादेव राजपुरोहितौ······यजेयातामि'त्यत्र तत्पुरुषमनादृत्य द्वन्द्व आश्रीयत इति बोध्यम् । ननु नैयायिकमते धवखदिरावितीतरेतरद्वन्द्वे लक्षणाया अनाश्रयणे कथं निर्वाहः ? कथञ्च न मीमांसकोक्तरीत्या धवद्वयस्य खदिरद्वयस्य च बोधापत्तिरिति चेन्न, स्वमते तत्र लक्षणां विनैव विभक्त्यर्थकर्मत्वे प्रकारतया धवखदिरयोर्बोधोपगमेन निर्वाहात्, एककधर्मोद्देश्यश्यतावच्छेदकस्थल एव च सुपासुद्देश्यतावच्छेदकव्याप्यसंख्याबोधकत्वस्य स्वीकृतत्वान्मीमांसकोक्तपद्धत्या तत्तद्द्वयस्य बोधानापत्तेः । नचैवं लक्षणाविरहितसमासत्वस्य कर्मधारयेतरेतरद्वन्द्वयोः समानत्वेन कर्मधारयादितरेतरद्वन्द्वे किं वैलक्षण्यमिति वाच्यम्, समस्यमानपदजन्यप्रतीतिविषययोरभेदविवक्षायामेव

विहितत्वस्य कर्मधारये, तस्या अभाव एव विहितत्वस्य चेतरेतरद्वन्द्वे सत्त्वेन तयोर्वैलक्षण्यादिति दिक् ॥

८६. प्रश्नः—समाहारद्वन्द्वे लक्षणाऽऽश्रीयते न वेति प्राचां नव्यानाञ्च मतेन विविच्यताम्, कस्य भेदे द्वन्द्व इति च निर्णीयताम् ।

उत्तरम्—अथाहिनकुलमित्यादिसमाहारद्वन्द्वे यद्यहिनकुलयोः समाहार इत्यादिप्रतीतिरनुभवसिद्धा तर्हि तत्र परपदस्याहिनकुलसमाहारादौ लक्षणा, पूर्वपदञ्च तात्पर्यग्राहकम् । न च भेरीमृदङ्गं वादयेत्यत्र कर्मत्वविशेष्यकसमाहारप्रकारकशाब्दबोधः कथमुपपद्येत, शब्दजनकसंयोगानुकूलव्यापारस्य वादनपदार्थतया धात्वर्थतावच्छेदकीभूततादृशसंयोगस्यापेक्षाबुद्धिविशेषरूपसमाहारेऽसत्त्वेन वादनकर्मत्वासम्भवादिति वाच्यम्, तादृशवादनकर्मत्वस्य स्वाश्रयवृत्तित्वसम्बन्धेन तादृशसमाहारे सत्त्वादित्यभिप्रयन्ति प्राचीनाः। नवीनास्तु—अहिनकुलमित्यादिसमाहारद्वन्द्वे—अहिर्नकुलश्चैव बुद्ध्यते, न तु समाहारः । नन्वेवं तत्रत्यविभक्त्यर्थैकत्वस्य कुत्रान्वयः ? समाह्रियमाणयोरेकत्वाभावादिति चेन्न, तत्साधुत्वार्थैकवचनबोध्यैकत्वस्य तयोः प्रत्येकमन्वयात् । न चैवमपि तस्य समाहारसंज्ञा निष्फलेति वाच्यम्, तस्यास्तत्र नपुंसकत्वनित्यैकवचनान्तत्वरूपविलक्षणधर्मसम्पादनार्थत्वात् । अत एव च समाहारातिरिक्तद्वन्द्वे एकवचनमसाध्विति वदन्ति । ननु 'चार्थे द्वन्द्वः' इति पाणिनीयसूत्रम्, तत्र–चार्थाश्चत्वारः, समुच्चयान्वाचयेतरेतरयोगसमाहारभेदात् । तत्रेतरेतरयोगसमाहारयोरेव द्वन्द्वः, सामर्थ्यसत्त्वात्, न तु समुच्चयान्वाचययोः, सामर्थ्याभावात् । तत्र चार्थस्य भेदव्याप्यत्वाद् भेदे द्वन्द्व इति पर्यवसिते कस्य भेदे द्वन्द्व इति चेदुच्यते-पदार्थयोः पदार्थानां वा भेदे द्वन्द्व इति । नन्वेवं 'नीलघटयोरभेदः' इत्यादिवाक्ये कथं द्वन्द्व उपपद्येत, नीलघटयोर्भेदाभावादिति चेन्न; तत्र नीलपदस्य नीलत्वे, घटपदस्य च घटत्वे लक्षणया प्रतीतयोर्नीलत्वघटत्वयोर्भेदसत्त्वाद् द्वन्द्वस्योपपत्तेः । न चैवमपि तत्र 'अभेदः' इति न सङ्गच्छेत, नीलत्वघटत्वयोरभेदाभावादिति वाच्यम्; तत्राभेदपदस्याश्रयाभेदार्थकत्वोपगमेन सामञ्जस्यात् । केचित्तु—तत्र पदार्थत्वं पदजन्यप्रतीतिविषयत्वम्, एवञ्च विशेषणविशेष्यविधया पदार्थतावच्छेदकस्य पदार्थस्य च पदजन्यप्रतीतेर्विषयत्वेन क्वचित्पदार्थभेदात् क्वचिच्च पदार्थतावच्छेदकभेदाद् द्वन्द्वः। तथा च नीलघटयोरित्यादौ पदार्थतावच्छेदकभेदादेव द्वन्द्वः, घटश्च घटश्च घटावित्यत्र च पदार्थभेदादेव प्रवृत्तं द्वन्द्वम्प्रबाध्य सरूपैकशेषप्रवृत्तिरिति वदन्ति ॥

८७. प्रश्नः—कर्मधारये कथं न लक्षणेति व्यवस्थाप्य 'निषादस्थपतिं याजयेदि'त्यत्र समासविशेषनिर्णयोपायः प्रदर्श्यताम् ।

उत्तरम्—अथ 'नीलोत्पलमि'त्यादिकर्मधारये नीलादिपदार्थस्याभेदसम्बन्धेनोत्पलादिपदार्थे प्रकारतयोपपत्तेर्लक्षणाबीजस्यानुपपत्तेरभावान्न लक्षणा । अत एव च 'निषादस्थपतिं याजयेदि'त्यत्र कर्मधारय एव स्वीक्रियते, न तु तत्पुरुषस्तथा सति लक्षणाऽऽपत्तेः । ननु 'स्त्रीशूद्रौ नाधीयातामि'त्यनेन वेदेन स्त्रीशूद्रमात्रयोर्वेदमात्राध्ययननिषेधाच्छूद्रान्तर्गतनिषादस्य याजनासम्भव इति चेन्न, 'अग्नीषोमीयं पशुमालभेते'ति विशेषविधिना यज्ञार्थपशुहिंसाविधानबलात् 'मा हिंस्यात् सर्वाभूतानी'तिनिषेधविधेर्विहितहिंसातिरिक्तहिंसानिषेधपरत्वस्येव 'निषादस्थपतिं याजयेदि'तिविशेषविधिना निषादकर्तृक-यागोपयोगि-वेदाध्ययनविधानबलात् 'स्त्रीशूद्रौ नाधीयातामि'तिनिषेधविधेर्विहितवेदाध्ययनातिरिक्तवेदाध्ययननिषेधपरत्वस्याङ्गीकारेण सर्वसामञ्जस्यादिति बोध्यम् ॥

८८. प्रश्नः—आसत्तेर्ज्ञानसत्त्वयोः कतरस्य कारणता शाब्दबोधम्प्रति प्राचीनेनानुमता ? कतरस्य च विश्वनाथेन ? तयोश्च मते—आसत्तेः कीदृशं लक्षणम् ? प्रकृतमूलपाठे च किमन्तरमित्युपपाद्यताम् ।

उत्तरम्—अथ 'सन्निधानन्तु पदस्यासत्तिरि' तिकारिकांशेनाभिहितस्योपपदसान्निध्यात्मकासत्तित्वस्य 'गिरिर्भुक्तमि'त्युदासीनपदयोः सान्निध्येऽतिप्रसङ्गात्—तात्पर्यविषयान्वयप्रतियोग्यनुयोग्युपस्थापकपदाव्यवधानमासत्तिः । तस्याश्च सत्त्वस्य शाब्दबोधम्प्रति कारणता नोपपद्येत, 'गिरिर्भुक्तमग्निमान् देवदत्तेने'त्यादौ गिरिपदाग्निमत्पदयोरव्यवधानभ्रमाच्छाब्दबोधस्योदयेन व्यतिरेकव्यभिचारादिति भ्रमप्रमासाधारणं तादृशपदाव्यवधानज्ञानमेव शाब्दबोम्प्रति कारणम् । अत एव—'आसत्ती'त्यनेन समासान्तर्गतेन निर्विभक्तिकेनैव घटिता, 'आसत्तियोग्यते'त्यादि कारिका सङ्गच्छत इत्यभिप्रयन्ति प्राचीनाः । विश्वनाथास्तु—तादृशपदाव्यवधानज्ञानस्य शाब्दबोधम्प्रति कारणता नोपपद्येत, तदभावेऽपि तादृशपदज्ञानाव्यवधानेन शाब्दबोधस्योपपत्तेः सर्वत्र शाब्दबोधात्प्राक् तादृशपदाव्यवधानज्ञानानियमेन व्यतिरेकव्यभिचारादिति—तात्पर्यविषयान्वयप्रतियोग्यनुयोग्युपस्थापदकपज्ञानाव्यवधानमेवासत्तिः । तस्याश्च सत्त्वमेव शाब्दबोधम्प्रति कारणम् । अत एव—'आसत्तिरि'त्यनेन समासासानन्तर्गतेन

सविभक्तिकेनैव घटिता 'आसत्तिर्योग्यते'त्यादि-कारिका सङ्गच्छते । न चैवं— 'सन्निधानन्तु पदस्यासत्तिरि'ति कारिकांशस्यासङ्गतिः, तत्र पदपदस्य पदज्ञान-परत्वात् । खण्डान्वयि-श्लोकादौ तु योजनावाक्यादेवान्वयबोध इति वदन्ति । नन्वेवं नीलपटयोरन्वयतात्पर्येण प्रयुक्तात् 'नीलो घटो द्रव्यं पटः' इत्यादिवा-क्यात्कथं नीलो घट इति शाब्दबोध इति चेन्न, लक्षणे तात्पर्यविषयपदेन तात्पर्य-विषयत्वप्रकारकनिश्चयविषयस्य विवक्षितत्वात्, निश्चयत्वस्य च भ्रमप्रमासाधा-रणत्वादिति दिक् ।

८९. प्रश्नः—अनेकपदघटितवाक्यस्थलेऽनुपपद्यमानायास्तादृशपद-ज्ञानाव्यवधानरूपासत्तेः कथं शाब्दबोधम्प्रति कारणतेत्युपपाद्य समा-धीयताम् ।

उत्तरम्—ननु नैयायिकमते योग्यविभुविशेषगुणानामयौगपद्यात्, स्वोत्तर-वर्तिविशेषगुणनाश्यत्वेन तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वाच्च—'छत्री कुण्डली वासस्वी देवदत्त' इत्याद्यनेकपदघटितवाक्यस्थले उत्तरपदस्मरणेन पूर्वपदस्मर-णस्य नाशात्तादृशपदज्ञानाव्यवधानरूपासत्तेरभावात् कथं तस्याः शाब्दबोधम्प्रति कारणतोपपद्येतेति चेन्न, तत्र चरमपदज्ञानोद्बुधैः प्रत्येकपदानुभवजन्यसंस्कारै-श्चरमस्य तावत्पदविषयकसमूहालम्बनात्मकैक ( वाक्य ) स्मरणस्योदयेन तादृ-शासत्तिसम्भवात् । न च समानविशेष्यकत्वसामानप्रकारकत्वाभयामेव स्मृति-संस्कारयोः कार्यकारणभावात्कथं प्रत्येकपदविषयकनानासंस्कारैः नानापदविष-कसमूहालम्बनरूपैकस्मरणमुपपद्येतेति वाच्यम्, नानासन्निकर्षैरेकप्रत्यक्षस्येव नानासंस्कारैरेकस्मरणोत्पत्तेरपि सम्भवात् । अन्यथा चरमवर्णज्ञानोद्बुद्धैः प्रत्येकवर्णानुभवजन्यनानासंस्कारैर्नानावर्णविषयकसमूहालम्बनात्मकैक ( पद ) स्मरणमपि नोपपद्येतेति दिक् ।

९०. प्रश्नः— विशेष्ये विशेषणमिति न्यायेनैव शाब्दबोधमभ्युपग-च्छतां तमुपस्थाप्य विशिष्टस्य वैशिष्ट्यमिति रीत्यैव शाब्दबोधं व्यव-स्थापयतां मतम्प्रदर्शयता सिद्धान्तो निरूप्यताम् ।

उत्तरम्—अथ वृत्तिज्ञानसहकृतपदज्ञानैर्यथाक्रमं जायमानानामाशुतर-विनाशिनीनां पदार्थोपस्थितीनां मेलनासम्भवात् सर्वत्र शाब्दबोधे समूहालम्ब-नात्मिकैव पदार्थोपस्थितिः कारणम् । एवञ्च सर्वत्र सकलपदार्थानां समूहाल-

म्बनस्मरणाद् 'युगपदेव विशेष्ये विशेषणमि'ति न्यायेनैव खलेकपोतन्यायात् क्रियाकर्मभावेनान्वयबोधरूपः शाब्दबोधः, न तु विशिष्टस्य वैशिष्ट्यमिति रीत्या ( घटमानयेत्यादौ प्रथमं घटीया कर्मतेत्येवं बोधोऽथ च घटकर्मकानयनमित्यादिबोध इत्यादिक्रमेण), तज्जनकविशेषणतावच्छेदकप्रकारकनिर्णयस्य पूर्वमभावादित्यभिप्रयन्तः केचन स्वमतसाधकतया 'वृद्धा युवानः शिशवः कपोताः खले यथाऽमी युगपत्पतन्ति । तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति ।।' इत्यादिवचनान्युपस्थापयन्ति । अपरे तु--

यद्यदाकांक्षितं योग्यं सन्निधानं प्रपद्यते ।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते ।।

स्वार्थाकांक्षितं स्वार्थयोग्यं कर्मत्वादि यद्यत् सन्निधानं स्वार्थं ( घटादि ) समूहालम्बनोपस्थितिविषयत्वं प्रपद्यते, तेन तेन कर्मत्वादिनाऽन्वितः स्वार्थो घटादिपदैरेव शाब्दबोधविषयो भवतीत्यर्थः । तथा च घटमानयेत्यादौ प्रथमं घटादिपदस्मरणन्ततो घटाद्यर्थानयादिपदविषयकसमूहालम्बनात्मकस्मरणन्तत आनयनाद्यर्थोपस्थितेः पूर्वमेव घटाद्यर्थोपस्थितेः घटीया कर्मतेत्यादिखण्डवाक्यार्थबोधस्तत आनयनाद्यर्थस्मृत्या घटकर्मकानयनमित्यादिमहावाक्यार्थबोधः । न चात्र सकलपदार्थगोचरसमूहालम्बनात्मकस्मरणापेक्षा, घटाद्यर्थस्मरणनाशेऽपि तादृशखण्डवाक्यार्थबोधसहकृतेनैव चरमपदार्थस्मरणेन तादृशमहावाक्यार्थबोधनिर्वाहात् । न हि शाब्दबोधम्प्रति पदज्ञानजन्यपदार्थस्मृतित्वेन हेतुत्वमपि तु स्मृतिशाब्दबोधानुगतेन पदज्ञानजन्यपदार्थज्ञानत्वेनैव । एवञ्च सर्वत्र खण्डवाक्यार्थबोधरूपस्य विशेषणतावच्छेदकप्रकारकनिश्चयस्य ( कारणस्य ) सत्त्वाद् विशिष्टस्य वैशिष्ट्यमितिरीत्यैव महावाक्यार्थबोधः । यत्र तु--खण्डवाक्यार्थबोधोत्तरं चरमपदस्मरणं ततस्तदर्थस्मरणन्ततो महावाक्यार्थबोधस्तत्र चरमपदार्थस्मृतिकाले खण्डवाक्यार्थबोधनाशाच्चरमपदार्थस्मरणेनैव खण्डवाक्यार्थविषयकसमूहालम्बनरूपेण विशिष्टस्य वैशिष्ट्यमितिरीत्या महावाक्यार्थबोधः ।

वस्तुतस्तु—यथा प्रत्यक्षादिकं विशिष्टस्य वैशिष्ट्यमिति रीत्या, विशेष्ये विशेषणमितिन्यायेन च भवति तथा शाब्दबोधोऽपि; सामग्रीसमवधानासमवधानयोरुभयत्र साम्यात् । तथा च–यत्र खण्डवाक्यार्थबोधसहकृतं खण्डवाक्या-

र्थविषयकसमूहालम्बनरूपं वा चरमपदार्थस्मरणं तत्र विशिष्टस्य वैशिष्ट्यमिति रीत्यैव महावाक्यार्थबोधः। यत्र तु सकलपदविषयकमिव सकलपदार्थविषयकमपि स्मरणं समूहालम्बनात्मकमेव जातन्तत्र विशेष्ये विशेषणमितिन्यायेनैव महावाक्यार्थबोध इति बोध्यम्।

९१. प्रश्नः—वैयाकरणसिद्धान्तेनोपपाद्य पदस्फोटो नैयायिकरीत्या निरस्यताम्।

उत्तरम्—अथैकैकवर्णादर्थप्रतीतिर्मा भूदिति क्रमिकवर्णसमुदाय एव तत्तदर्थवाचकताऽभ्युपगन्तव्या, किन्तु साऽपि नोपपद्यते, अस्थिराणां वर्णानां समुदायस्यानुपपत्तेरिति तत्तदर्थवाचकत्वेन स्फोट एवाङ्गीकार्यः, स चापि पदाद्याश्रितत्वात् पदस्फोटादिनाम्ना व्यवह्रियमाणः पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितचरमवर्णानुभवेनाभिव्यक्तस्तत्तदर्थमुपस्थापयतीति वैयाकरणा अभिप्रयन्ति।

तन्न युक्तम्, स्फोटाभिव्यञ्जकत्वेन वैयाकरणैरभिमतेन पूर्वपूर्ववर्णानुभवजनितसंकारसहितचरमवर्णानुभवेनैवोद्बुद्धैः क्रमिकतत्तद्वर्णविषयकसंस्कारैरुपपन्नात् क्रमिकतत्तद्वर्णविषयकपदस्मरणादेवार्थोपस्थितेरुपपत्तेरिति नैयायिका वदन्तीति बोध्यम्॥

९२. प्रश्नः—का नाम योग्यता ? तस्या ज्ञानस्यैव शाब्दबोधम्प्रति कारणतेति प्राच्यमतेन व्यवस्थाप्य; बाधनिश्चयाभावस्यैव शाब्दबोधम्प्रति कारणता, न तु योग्यताज्ञानस्येति नव्यमतञ्चोपस्थापयता तयोः किं युक्तमिति समीक्ष्यताम्।

उत्तरम्—अथैकपदार्थेऽपरपदार्थसम्बन्धो योग्यता। तज्ज्ञानसत्त्वे जलेन सिञ्चतीत्यादौ शाब्दबोधः, तज्ज्ञानभावे च वह्निना सिञ्चतीत्यादौ न शाब्दबोध इत्यन्वयव्यतिरेकाभ्यां योग्यताज्ञानं शाब्दबोधम्प्रति हेतुः। नन्वेतादृश्या योग्यताया ज्ञानं शाब्दबोधात् पूर्वं सर्वत्र न सम्भवति क्वचिद् वाक्यार्थस्यापूर्वत्वेन शाब्दबोधात् प्रागनिश्चितत्वादिति चेन्न, योग्यताज्ञानस्य संशयनिश्चयसाधारणयोग्यताज्ञानत्वेन शाब्दबोधम्प्रति हेतुताया अभ्युपगमात् तत्तत्पदार्थस्मरणे सति-अपूर्वार्थस्थले संशयरूपस्य दृष्टार्थस्थले च निश्चयरूपस्य योग्यताज्ञानस्य सम्भवेनानुपपत्तिविरहादिति वदन्ति प्राचीनाः। नवीनान्तु—लौकिकसन्नि-

कर्माजन्यदोषविशेषाजन्यतद्विशिष्टबुद्धिमात्रम्प्रति तदभावनिश्चयस्य प्रतिबन्धकत्वादयोग्यतानिश्चयस्य शाब्दबोधम्प्रति प्रतिबन्धकत्वं सिद्धमेवेति कार्यमात्रं प्रति प्रतिबन्धकाभावस्य कारणत्वादयोग्यतानिश्चयाभावस्य सिद्धेनैव शाब्दबोधम्प्रति कारणत्वेन निर्वाहे योग्यताज्ञानस्य तम्प्रति पृथक् कारणत्वं न कल्पनीयम्। नन्वेवं योग्यताज्ञानाभावेऽपि शाब्दबोध आपद्यतेति चेन्न, सेकादौ वह्निकरणकत्वाद्यभावरूपायोग्यतानिश्चयेन प्रतिबन्धादेव वह्निना सिञ्चतीत्यादौ शाब्दबोधापत्तिविरहेण, अयोग्यतानिश्चयाभावस्थले च शाब्दबोधस्येष्टत्वेन साव्यञ्जस्यादित्यभिप्रयन्ति। वस्तुतस्तु-तादृशतद्विशिष्टबुद्धिसामान्यं प्रति तदभावनिश्चयस्य प्रतिबन्धकत्वे मुखं चन्द्र इत्यादिरूपकादौ प्रहसनादौ च बाधनिश्चयसत्त्वेऽपि अनुभवसिद्धस्य शाब्दबोधस्यापलापापत्तिः। उक्तञ्च 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इत्यादि। तथा च शाब्दान्यतादृशतद्विशिष्टबुद्धिं प्रत्येव बाधनिश्चयस्य प्रतिबन्धकतया वह्निना सिञ्चतीत्यादौ बाधनिश्चयसत्त्वे शाब्दबोधवारणाय योग्यताज्ञानस्य शाब्दबोधहेतुता आवश्यकी। नन्वेवमपि बाधनिश्चयसत्त्वेन योग्यताज्ञानस्यासम्भवादुक्तरूपकप्रहसनादौ कथं शाब्दबोधस्योपपत्तिः। न च तत्र शाब्दबोध एवाहार्यात्मकोऽस्त्विति वाच्यम्, प्रत्यक्षेतरज्ञानस्याहार्यत्वानभ्युपगमेन शाब्दबोधस्याहार्यत्वाभ्युपगमेऽपसिद्धान्तापातादिति दिक्।

९२. प्रश्नः—आकांक्षां निरूप्य तस्या ज्ञानस्य शाब्दबोधं प्रति कारणत्वं व्यवस्थापयता आसत्त्याकांक्षयोर्भेदो विविच्यताम्।

उत्तरम्—अथ येन पदेन विना यस्य पदस्य यादृशशाब्दबोधाजनकता, अव्यवहितपूर्वत्वाव्यहितोत्तरत्वान्यतरसम्बन्धेन तत्पदविशिष्टतत्पदत्वं तादृशशाब्दबोधप्रयोजकाकांक्षा। यथा घटमानयेत्यत्र घटपदेन विना अम्पदस्येष्टशाब्दबोधाजनकत्वात् तत्रोक्तान्यतरसम्बन्धेन घटपदविशिष्टाम्पदत्वं तत्प्रयोजकाकांक्षा। तत्राजनकतान्तस्य स्वरूपत एव शाब्दबोधोपयोगिता, तादृशान्यतरसम्बन्धेन तत्पदविशिष्टतत्पदत्वांशस्तु ज्ञात एवोपयुज्यते शाब्दबोधे। वस्तुतस्तु—अव्यवहितोत्तरत्वादीनां सम्बन्धत्वे मानाभावात्—पदयोरव्यवधानमासत्तिरिति प्राच्यपक्षे तत्पदाव्यवहितोत्तरतत्पदत्वमाकाङ्क्षा। पदज्ञानयोरव्यवधानमासत्तिरिति नव्यमते तु तत्पदज्ञानाव्यवहितोत्तरतरतत्पदज्ञानत्वमाकांक्षा।

तत्राप्यव्यवधानांशस्यासत्त्वैव लाभात् कर्मतादिबोधम्प्रति प्रत्यये तज्ज्ञाने वा प्रकृत्युत्तरत्वरूपायाः प्रकृतिज्ञानोत्तरत्वरूपाया वा आकांक्षाया ज्ञानं कारणम् । अतो घटः कर्मत्वमानयनं कृतिरित्यादौ न शाब्दबोध इति दिक् ॥

९४. प्रश्नः—तात्पर्यस्य स्वरूपमुपवर्ण्य तज्ज्ञानस्य शाब्दबोधम्प्रति कारणत्वं व्यवस्थापयता वैदिक-शुकवाक्याभ्यां कथं शाब्दबोध इत्युपपाद्यताम्, अन्येषाञ्च मतं प्रदर्श्यताम् ।

उत्तरम् - अथ वक्तुरिच्छा तात्पर्यम्, तज्ज्ञानं यदि शाब्दबोधम्प्रति कारणं न स्यात्तर्हि सैन्धवमानयेत्यादितः क्वचिदश्वस्य क्वचिच्च लवणस्य बोध-इत्यादिव्यवस्था नोपपद्येत, अतः स्वप्रयोज्योच्चरितत्वसम्बन्धेन यादृशवाक्यविशेष्यकं वक्तुरिच्छारूपतात्पर्यज्ञानं तत् तादृशवाक्यजन्यशाब्दबोधम्प्रति कारणम् । ननु तात्पर्यबोधकं प्रकरणाद्येव शाब्दबोधे कारणमस्त्विति चेन्न, प्रकरणादेरननुगमात् । तात्पर्यज्ञापकत्वेन तस्यानुगमे तु लाघवात् तात्पर्यज्ञानस्यैव तत्र कारणत्वं वरम् । एवं तात्पर्यनिश्चयस्य शाब्दबोधत्वावच्छिन्नं प्रति कारणत्वे सिद्धे—वेदवाक्येभ्यः संवादिशुकवाक्येभ्यश्च शाब्दबोधार्थमीश्वरीयतात्पर्यज्ञानमाश्रयणीयम् । न च तत्राध्यापकतात्पर्यज्ञानमेवाश्रीयतामिति वाच्यम्, 'नाहो न रात्रिर्न नभो न भूमि'रित्याद्यागमसिद्धप्रलयानन्तरं जायमानस्य सर्गस्यादावध्यापकाभावात् । विसंवादिशुकवाक्यतो बोधार्थन्तु शिक्षयितुरेव तात्पर्यज्ञानमाश्रयणीयम् । अन्ये तु—नानार्थगृहीतवृत्तिकपदेभ्य एव शाब्दबोधम्प्रति तात्पर्यज्ञानं कारणम् । तथा च तात्पर्यज्ञानं विनैव शुकवाक्यतः शाब्दबोधः, वेदे तु—अनादिमीमांसापरिशोधिततर्कैः—लाघवज्ञानात्मकतर्कसहकृतानुमानैरर्थावधारणमित्यभिप्रयन्ति ।

९५. प्रश्नः—स्मृतिम्प्रति ज्ञानत्वेनानुभवत्वेन वा कारणतेति विविच्यताम् ।

उत्तरम्—अथ समवायेन स्मृतिम्प्रति समवायस्वजन्यसंस्कारान्यतरसम्बन्धेनानुभवः कारणम् । नन्वेवं स्मरणोत्तरं स्मरणं नोपपद्येत, समानप्रकारकस्मरणेनानुभवजन्यसंस्कारस्य नष्टत्वादिति तदुपपत्तये समवायेन स्मृतिं प्रति उक्तान्यतरसम्बन्धेन ज्ञानस्यैव कारणताऽभ्युपगन्तव्या, तथा च स्मरणेन संस्कारान्तरद्वारा स्मरणान्तरस्योपपत्तिरिति केचिद्वदन्ति, तन्न युक्तम्, यत्र घटपटा-

दिविषयकसमूहालम्बनात्मकानुभवोत्तरं यस्य कस्यचिदेव विषयस्य स्मरणमजनिष्ट, न तु सकलस्य, तत्र स्मरणस्य समानप्रकारकत्वाभावेन संस्कारनाशकत्वाभावादगत्या चरमस्मरणस्यैव सर्वत्र संस्कारनाशकताऽभ्युपगमेन स्मरणोत्तरस्मरणोपपत्तेः । न चैवं स्मरणेन संस्काराजनने नानास्मरणाद् दृढतरसंस्कारो नोपपद्येतेति वाच्यम् , झटित्युद्बोधकसमवधानस्यैव दार्ढ्यपदार्थत्वात् । न च विनिगमनाविरहादेव स्मृतिम्प्रत्यनुभवत्वेनेव ज्ञानत्वेनापि कारणता स्यादिति वाच्यम् , व्याप्यधर्मेण व्यभिचाराज्ञाने व्यापकधर्मेणान्यथासिद्धत्वात् । अन्यथा घटम्प्रति दण्डत्वेनेव द्रव्यत्वेनापि कारणता प्रसज्येतेति दिक् ॥

९६. प्रश्नः—मनसि प्रमाणमुपन्यस्य तस्याणुत्वमुपपाद्यताम् ।

उत्तरम्—अथ मनसोऽतीन्द्रियत्वेन प्रत्यक्षायोग्यत्वात् तत्रानुमानं प्रमाणयति—साक्षात्कार इति । तथा हि—सुखादिसाक्षात्कारः सकरणकः जन्यसाक्षात्कारत्वात् चाक्षुषादिसाक्षात्कारवदित्यनुमानात् । तत्करणत्वेन, सुखादीनि सासमवायिकारणकानि भावकार्यत्वात् पटादिवदित्यनुमानाच्च तदसमवायिकारणसंयोगाश्रयत्वेन मनसः सिद्धिः । तस्याणुत्वमुपपादयति—अयौगपद्यादिति । चाक्षुषादिज्ञानानामेककालानुत्पत्तिकत्वान्मनसोऽणुत्वं सिद्ध्यति । तथा हि—सत्यपि नानेन्द्रियाणां विषयैः सन्निकर्षे यत्संयोगादेकेनेन्द्रियेण ज्ञानमुत्पद्यते, यदसंयोगाच्च परैरिन्द्रियैर्ज्ञानं नोत्पद्यते तदसन्निधानं मनसो विभुत्वे न सम्भवतीति न विभु मनः । एवं सिद्धे तत्र विभुत्वाभावे मनोऽणु विभुभिन्नत्वे सति नित्यपरिमाणाश्रयत्वात् परमाणुवदित्यनुमानेन तस्याणुत्वं सिद्ध्यति, नित्यपरिमाणाश्रयता च नित्यद्रव्यत्वेन साध्या । नन्वेवं दीर्घशष्कुलीभक्षणादौ नानावधानभाजाञ्च कथमेकदा नानेन्द्रियजन्यज्ञानमिति चेन्न, मनसोऽतिलाघवात् त्वरया नानेन्द्रियसम्बन्धाद् भिन्नक्षणोत्पन्नेऽपि नानाज्ञाने शतदलकमलभेदादाविवाव्यवहितकालोत्पत्तिकत्वदोषेण जायमानस्य यौगपद्यप्रत्ययस्य भ्रान्तत्वात् । न च मनसः सङ्कोचविकासशालित्वात् संकोचे एकदैकेन्द्रियसंबन्धादेकं ज्ञानं, विकासे त्वेकदा नानेन्द्रियसंबन्धान्नानाज्ञानमुपपद्यतामिति वाच्यम् , नानावयवतन्नाशादिकल्पने गौरवाल्लाघवान्निरवयवस्य मनसोऽवयवतारतम्यं विना परिमाणतारतम्यानुपपत्तेरिति दिक् ॥ इति शब्दखण्डम् ।

---

९७. प्रश्नः—गुणत्वजातौ प्रमाणं प्रदर्श्य गुणस्य लक्षणं निरूप्यताम् ।

उत्तरम्—अथ गुणत्वजातौ किं प्रमाणमिति चेन्न, द्रव्यकर्मभिन्नजातिमन्निष्ठकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् घटगतकार्यतानिरूपितदण्डनिष्ठकारणतावदित्यनुमानेन चतुर्विंशतिगुणानुगतगुणत्वात्मकधर्मसिद्धिः, अन्यूनानतिप्रसक्तधर्मस्यैवावच्छेदकत्वात् । ततो गुणत्वं जातिः जातिबाधकरहितत्वे सति अनुवृत्तप्रत्ययहेतुत्वाद् द्रव्यत्वादिवदित्यनुमानेन गुणत्वस्य जातित्वं सिद्धयति । ननु द्रव्यत्वव्यापकतावच्छेदकसत्ताभिन्नजातिमत्त्वं गुणस्य लक्षणम् । तत्र—द्रव्यत्वव्यापकतावच्छेदकपददानेन द्रव्यकर्मणोर्नातिव्याप्तिः, गगनादौ द्रव्यकर्मणोरभावेन द्रव्यत्वकर्मत्वयोर्द्रव्यत्वव्यापकतावच्छेदकत्वाभावात् । सत्ताभिन्नपददानेन सत्तारूपजातिमादाय द्रव्यादौ नातिव्याप्तिः । जातिपददानेन च द्रव्यत्वाद्यादाय द्रव्यत्वादौ नातिव्याप्तिः, द्रव्यत्वत्वादेर्जातित्वाभावात् । गुणत्वस्य द्रव्यत्ववन्निष्ठाभावप्रतियोगितानवच्छेदकत्वात् सत्ताभिन्नत्वे सति जातित्वाच्च तदादाय गुणे लक्षणसमन्वयः । अथवा सामान्यवत्त्वे सति कर्मान्यत्वे सति निर्गुणत्वं गुणस्य लक्षणम् । तत्र—प्रथमसत्यन्तदानेन जात्यादौ नातिव्याप्तिः, तस्य सामान्यवत्त्वाभावात् । द्वितीयसत्यन्तदानेन कर्मणि नातिव्याप्तिः । विशेष्यदानेन च द्रव्ये नातिव्याप्तिः, तस्य निर्गुणत्वाभावात् । गुणस्य सामान्यवत्त्वात् कर्मान्यत्वान्निर्गुणत्वाच्च तत्र लक्षणसमन्वय इति दिक् ॥

९८. प्रश्नः—रूपत्वजातौ प्रमाणमुपन्यस्य नीलादिरूपाणामैक्यं खण्डयता चित्ररूपस्य प्राच्यमतेन सत्त्वं, नव्यमतेन चासत्त्वमुपपाद्यताम् ।

उत्तरम्—अथ सकलरूपेषु एकस्या जातेः सत्त्व एव तज्ज्ञानरूपसामान्यलक्षणया सकलरूपप्रत्यक्षस्य जायमानत्वात् सर्वेषु रूपेषु रूपपदशक्तिग्रहः संभवतीति तन्निर्वाहाय सकलरूपानुगतो रूपत्वाख्य एको धर्मोऽवश्यमभ्युपगन्तव्यः; तस्य च जातित्वं जातिबाधकरहितत्वे सति अनुवृत्तप्रत्ययहेतुत्वात् सिद्धयति । ननु नीलपीतादिषु इदं रूपमिदं रूपमित्याद्यनुगतप्रतीतेरभावे कथं रूपत्वजातेः प्रत्यक्षेण सिद्धिरिति चेन्न, तत्र तादृशप्रतीतेरसत्त्वेऽपि अयं वर्णोऽयं वर्ण इत्याद्यनुगतप्रतीतेः सत्त्वात् ।

नन्वेवं रूपत्वे जातित्वस्य सिद्धावपि नीलत्वादीनां जातित्वं नोपपद्येत, नीलादीनामेकव्यक्तित्वादेकव्यक्तिवृत्तिधर्माणाञ्च जातित्वाभावादिति चेन्न; नीलो नष्टो रक्त उत्पन्न इत्यादिप्रतीतेर्नीलादीनामुत्पादविनाशशालितया नानात्वात् । न च तादृशप्रतीतौ नीलादिसमवायरक्तादिसमवाययोरेवोत्पाद-विनाशविषयकत्वमिति वाच्यम्, तत्प्रतीत्या समवायानुल्लेखात् । न च स एवायं नील इत्यादिप्रत्यक्षबलाल्लाघवाच्च नीलादीनामैक्यमिति वाच्यम्, तादृशप्रत्यक्षस्य सैवेयं गुर्जरीत्यादिप्रत्यक्षस्येव तत्सजातीयविषयत्वात् लाघवस्य च नीलो नष्टो रक्त उत्पन्न इत्यादिप्रत्यक्षबाधितत्वात् । ननु कथं चित्रं नीलपी-तादिसमूहातिरिक्तं रूपं सिद्ध्यतीति चेन्न; नीलपीताद्यवयवारब्धस्यावयविनो न हि नीरूपता, तथा सति तस्याप्रत्यक्षत्वप्रसङ्गात् । नापि तत्र व्याप्यवृत्ति नीलादि रूपमुत्पद्यते, तथा सति तत्र पीतावच्छेदेनापि चक्षुःसंयोगे चक्षुःसंयुक्त-समवायसन्निकर्षेण नीलस्य प्रत्यक्षापत्तेः । न च तत्राव्याप्यवृत्ति नीलाद्युत्पद्यते, व्याप्यवृत्तिजातीयगुणानामव्याप्यवृत्तित्वे विरोधात् । तस्मान्नानाजातीयरूपैर-वयविनि विजातीयं चित्रं रूपमारभ्यते, अतएवैकं चित्ररूपमित्यनुभवोऽप्युप-पद्यते । न च नीलपीतादिरूपसमुदायवृत्त्येकत्वमादाय तदनुभवोपपत्तिः, तथा सति चित्रमितिप्रतीतिविषयताया नानारूपे कल्पने गौरवात् । न च चित्ररूप-वदवयविनि स्वाश्रयसमवेतत्वसम्बन्धेनावयवनीलादीनां सत्त्वात्कथं न तत्र नीलाद्युत्पत्तिरिति वाच्यम्, समवायेन नीलम्प्रति स्वसमवायिसमवेतत्वसम्बन्धेन नीलातिरिक्तरूपत्वेन, पीतञ्च प्रति पीतातिरिक्तरूपत्वेन प्रतिबन्धकत्वमित्यादि-रीत्या प्रतिबध्यप्रतिबन्धकभावकल्पनादिति प्राञ्चोऽभिप्रयन्ति । नव्यास्तु— नीलपीतादिरूपवदवयवारब्धेऽवयविनि अव्याप्यवृत्त्येव नानारूपमुत्पद्यते, नीलादेश्चोक्तरीत्या पीतादिप्रतिबन्धकत्वकल्पने गौरवात् । अत एव—'लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः । श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ।।' इत्यादि शास्त्रमप्युपपद्यते । न च व्याप्यवृत्त्यव्याप्यवृत्त्योर्विरोधः, मानाभा-वात् । नापि तत्र चित्रमितिप्रतीतिविषयताया एकत्र कल्पने लाघवादेकं चित्र-रूपम्, अनुभवविरोधादिति वदन्ति ।।

९९. प्रश्नः—वैशेषिकाभिमतां पाकप्रक्रियाम्प्रदर्श्य तत्र नैयायिका-भिप्रेता पद्धतिः प्रतिपाद्यताम् ।

उत्तरम्—अथ रूपादिचतुष्टयं पृथिव्यां पाकजम्। तत्र पीलुपाकवादिनो वैशेषिकाः परमाणावेव पाकमभ्युपगच्छन्ति, तथा हि—पक्वघटारम्भकत्र्यणुकस्यापक्वस्यानुपलब्ध्या तत्र पाके सिद्धे तदवयवद्व्यणुकेऽपि पाकः स्वीकार्यः, अन्यथा द्व्यणुकगतश्यामरूपस्य स्वाश्रयसमवेतत्वसम्बन्धेन त्र्यणुके सत्त्वात् तत्र रक्तरूपं नोत्पद्येत, नीलपीतावयवारब्धे घटे नीलाद्युत्पत्तिवारणाय समवायेन रक्तरूपं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन रक्तान्यरूपत्वादिना प्रतिबध्यप्रतिबन्धकभावस्य स्वीकारात्। एवं तदवयवपरमाणावपि पाकोऽङ्गीकार्यः, अन्यथा परमाणुगतश्यामरूपेण पुनर्द्व्यणुके श्यामरूपोत्पत्त्या तस्योक्तसम्बन्धेन त्र्यणुके सत्त्वात् पुनस्तत्र रक्तरूपोत्पादानुपपत्तिः। अवयविना चावष्टब्धेष्ववयवेषु पाको न सम्भवतीति विलक्षणतेजःसंयोगेनावयविषु विनष्टेषु स्वतन्त्रेषु परमाणुषु पाकः, ततश्च पक्वपरमाणुसंयोगात् द्व्यणुकादिक्रमेण पुनर्महावयविपर्यन्तमुत्पत्तिः, तेजसामतिशयितवेगवशात् झटिति पूर्वव्यूहनाशो व्यूहान्तरोत्पत्तिश्चेति बोध्यम्। पिठरपाकवादिनो नैयायिकास्तु—परमाणाववयविनि च पाकं मन्यन्ते, तथा हि—अवयविनां सच्छिद्रत्वात्तदन्तःप्रविष्टैस्तेजःसूक्ष्मावयवैरवयविनाऽवष्टब्धेष्वप्यवयवेषु पाको न विरुध्यते, अन्यथाऽनन्तावयवितन्नाशकल्पने गौरवम्। इत्थञ्च सोऽयं घट इत्यादिप्रत्यभिज्ञाऽपि सङ्गच्छते। यत्र तु न तादृशी प्रत्यभिज्ञा, तत्रावयविनाशोऽपि स्वीक्रियत इति दिक्॥

१००. प्रश्नः—द्वित्वादेरुत्पत्तावसमवायि निमित्तञ्च किं कारणम्? तस्य च नाशकः क इति विवेचयता द्वित्वादेः पर्याप्तेः प्रत्यक्षस्य च प्रकारमुपपाद्यापेक्षाबुद्धेः स्वरूपं त्रिक्षणावस्थायित्वञ्च निरूपयता बहुत्वसंख्या मतभेदेन समीक्ष्यताम्।

उत्तरम्—अथ द्वित्वादेरुत्पत्तावसमवायि कारणं तत्समवायिकारणगतयावदेकत्वम्, निमित्तञ्च कारणमपेक्षाबुद्धिः। न चैवं यावदपेक्षाबुद्धिसत्त्वमविरलक्रमेण द्वित्वाद्युत्पद्येतेति वाच्यम्, तत्तत्पुरुषीयापेक्षाबुद्धिजन्यानेकसंख्यात्वाद्यवच्छिन्नं प्रति तत्तत्पुरुषीयापेक्षाबुद्धिजन्यानेकसंख्यादेः प्रतिबन्धकत्वाभ्युपगमात्। ननु द्वित्वादेर्नाशकः क इति चेन्न, अपेक्षाबुद्धिशून्यकाले द्वित्वादेः प्रत्यक्षाभावात्तस्योत्पादिकाऽपेक्षाबुद्धिस्तस्या नाशाच्च द्वित्वादेर्नाश इति कल्पनात्। अपेक्षाबुद्धेश्च द्वित्वादिहेतुत्वादेव—तत्पुरुषीयापेक्षाबुद्धिजन्यद्वित्वादि

तेनैव ज्ञायते, न तु तद्भिन्नेनेति कल्पयितुं शक्यते । न चापेक्षाबुद्धेर्द्वित्वप्रत्यक्षं प्रत्येव कारणत्वमस्तु, न तु द्वित्वम्प्रतीति वाच्यम्, द्वित्वप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वापेक्षया द्वित्वत्वस्य तत्त्वे लाघवेन द्वित्वं प्रत्येव तस्याः कारणत्वस्योचितत्वात् । यद्यपि घटो द्वित्ववानित्यादिप्रतीतेः सत्त्वाद् द्वित्वादिसमवायः प्रत्येकं घटादावपि वर्तते, तथापि 'एको द्वावि'ति प्रत्ययस्याभावाद्, 'एको न द्वावि'ति प्रतीतेः सत्त्वाच्च द्वित्वादीनां पर्याप्तिलक्षणः कश्चन सम्बन्ध उभयाद्याश्रयोऽभ्युपगम्यते । एवञ्च पर्याप्तिसम्बन्धेन द्वित्वस्य प्रत्येकमभावाद् 'एको द्वावि'त्यप्रत्ययस्य, तादृशसम्बन्धेन च द्वित्ववतो भेदस्य प्रत्येकं सत्त्वाद् 'एको न द्वावि'ति प्रतीतेरुपपत्तिः । वस्तुतस्तु-आकाशाविति प्रयोगस्य प्रामाण्यापत्तिवारणायैव पर्याप्तिसम्बन्धः स्वीकृतः, स चायमेको घट इमौ द्वाविति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः ।

अथ कथं द्वित्वादेः प्रत्यक्षमुपपद्यत इति चेत्तदोच्यते-प्रथममपेक्षाबुद्धिः, ततो विशेषणज्ञानं द्वित्वत्वादिनिर्विकल्पात्मकम्, ततो द्वित्वत्वादिविशिष्टलौकिकप्रत्यक्षमुपपद्यत इति । तत्तद्व्यक्तिमात्रनिष्ठेदन्त्वावच्छिन्नविशेष्यतानिरूपितैकत्वप्रकारताशालिनी 'अयमेकोऽयमेक इत्याकारिका' बुद्धिरेवापेक्षाबुद्धिः । यद्यपि ज्ञानानां द्विक्षणमात्रस्थायित्वं, योग्यविभुविशेषगुणानां स्वोत्तरकालवृत्तिगुणनाश्यत्वात्; तथापि द्वित्वादिप्रत्यक्षोपपत्तयेऽपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वं कल्प्यते, अन्यथा द्वित्वत्वादिनिर्विकल्पकप्रत्यक्षकाल एवापेक्षाबुद्धिनाशात्तदनन्तरं द्वित्वादेर्नाश एव स्यान्न तु प्रत्यक्षं, तदानीं विषयाभावात्, 'सम्बद्धं वर्तमानञ्च गृह्यते चक्षुरादिना' इत्याद्यनुरोधाच्च लौकिकप्रत्यक्षम्प्रति विषयस्य कार्यसहभावेनैव हेतुत्वादिति द्वित्वादिनिर्विकल्पकज्ञानमेवापेक्षाबुद्धेर्नाशकं कल्प्यते । यत्रैकत्वविशेष्यकसंख्यात्वनियतत्रित्वादिप्रकारकज्ञानशून्यकालिकमनेकैकत्वज्ञानं, तत्र त्रित्वादिभिन्ना बहुत्वसंख्योत्पद्यते, यथा सेनावनादाविति कन्दलीकारा वदन्ति । आचार्यास्तु-त्रित्वादिकमेव बहुत्वं मन्यन्ते, तथा च त्रित्वत्वादिव्यापिका बहुत्वत्वजातिर्नातिरिच्यते, सेनावनादावुत्पन्नेऽपि त्रित्वादौ न त्रित्वत्वादेर्ग्रहः, तम्प्रति कारणत्वेन स्वीकृतस्य नियतानेकैकत्वज्ञानस्याभावात् । इत्थञ्च चतुष्ट्वादिरूपे बहुत्वे त्रित्वादिरूपस्वसजातीयनिरूपितोत्कर्षसत्त्वाद् 'इतो बहुतरेयं सेने'ति प्रतीतिरुपपद्यते, बहुत्वस्य त्रित्वाद्यतिरिक्तसंख्यात्वे तु तस्यैकरूपत्वेन तारतम्याभावात्सा नोपपद्येतेति दिक् ॥

१०१. प्रश्नः—द्व्यणुकत्रसरेणुपरिमाणयोः कुतः संख्यामात्रजन्यत्वम् ? इति विवेचयता आश्रयनाशस्य परिमाणनाशकत्त्वमुपपाद्यताम् ।

उत्तरम्—अथ द्व्यणुकस्य त्रसरेणोश्च परिमाणम्प्रति परमाण्वोर्द्व्यणुकानाञ्च परिमाणं न कारणम्, परिमाणस्य स्वसजातीयोत्कृष्टपरिमाणजनकत्वनियमेन परमाणुपरिमाणे स्वापेक्षानुत्कृष्टद्व्यणुकपरिमाणजनकस्य, द्व्यणुकपरिमाणे च स्वासजातीयत्रसरेणुपरिमाणजनकत्वस्यासम्भवात् । अत एव परमाण्वोर्द्वित्वसंख्यामात्रं द्व्यणुकपरिमाणस्य, द्व्यणुकानाञ्च त्रित्वसंख्यामात्रं त्रसरेणुपरिमाणस्यासमवायिकारणम् । नन्वाश्रयनाशस्य कथं परिमाणनाशकत्वम् ? सत्यप्यवयविनि परमाणूनां विश्लेषे उपचये वाऽवयविनः प्रत्यभिज्ञानेऽपि परिमाणान्तरस्य प्रत्यक्षसिद्धत्वादिति चेन्न, तत्र परमाणूनां विश्लेषे उपचये वाऽसमवायिकारणनाशेन द्व्यणुकनाशे त्र्यणुकनाशादिक्रमेण पूर्वावयविनो नाशेन पूर्वपरिमाणस्यापि नाशात्परिमाणान्तरस्यानुभवसिद्धस्योपपत्तये परावयव्युद्गमकल्पनात् । न च पटाद्यनाशेऽपि तन्त्वन्तरसंयोगात् परिमाणाधिक्यं न स्यादिति वाच्यम्, तत्र तन्त्वन्तरसंयोगे वेमाद्यभिघातेन तन्तुसंयोगनाशात् पूर्वपटस्य नाशेन पटान्तरोत्पत्तेः स्वीकारात् । न च पूर्वतन्तव एव तन्त्वन्तरसहकारात् पूर्वपटे सत्येव पटान्तरमारभन्तामिति वाच्यम्, मूर्त्तयोः समानदेशताविरोधात्तत्र पटद्वयासम्भवात्, एकदा नानाद्रव्यस्य तत्रोपलम्भस्य बाधितत्वाच्च । तस्मात्पूर्वद्रव्यस्य प्रतिबन्धकस्य विनाशे परद्रव्योत्पत्तिरित्येव मन्तव्यमिति दिक् ॥

१०२ प्रश्नः—पृथक्त्वस्यान्योन्याभावेनैव गतार्थत्वात्कथं तस्य गुणान्तरत्वमिति प्रतिपाद्यताम् ।

उत्तरम्—नन्वयमस्मात्पृथगित्यादिप्रतीतावपि अन्योन्याभाव एव भासते, न तु पृथक्त्वमिति स्वीकारेणैव निर्वाहे कथन्तस्य गुणान्तरत्वं मन्यते ? न च विनिगमनाविरहात् घटः पटो नेत्यादिप्रतीतावपि पृथक्त्वमेव भासते, न त्वन्योन्याभाव इत्यङ्गीकारेणैवोपपत्तौ कथन्तस्य चतुर्थाभावत्वं स्वीक्रियत इति वाच्यम्, तस्याभावे रूपं न घट इति प्रतीत्यनुपपत्तेः । न हि रूपे घटावधिकं पृथक्त्वम् न च घटे घटावधिकं पृथक्त्वम्, येन सामानाधिकरण्यरूपपरम्परा-

सम्बन्धविषयकत्वं प्रकल्प्योक्तप्रतीतिरुपपद्येतेति चेन्न, अयमस्मात्पृथगिदमिदं नेतिप्रतीत्योर्वैलक्षण्यात्। न च तयोः शब्दवैलक्षण्यमेव, न त्वर्थवैलक्षण्यमिति वाच्यम्, विनाऽर्थभेदं पटो घटात्पृथगित्यत्रेव घटो न पट इत्यत्रापि पञ्चमी-प्रसङ्गात्। तस्माद्यदर्थयोगे पञ्चमी, सोऽर्थो नञर्थान्योन्याभावतो भिन्नोऽतः पृथक्त्वाख्यं गुणान्तरमिति।

१०३. प्रश्नः— विभागजविभागस्य भेदौ सोदाहरणं निरूप्येताम्।

उत्तरम्—अथ विभागजविभागो द्विविधः कारणमात्रविभागजन्य-कारणाकारणविभागजन्यभेदात्। तत्राद्यः—यत्रैककपाले कर्म, ततः कपाल-द्वयविभागः, ततो घटारम्भकसंयोगनाशः, ततो घटनाशः, ततस्तेनैव कपाल-विभागेन सकर्मणः कपालस्याकाशविभागः, तत आकाशसंयोगनाशः, तत उत्तरदेशसंयोगः, ततः कर्मनाशस्तत्र। न च तेन कर्मणैव देशान्तरविभागः कथं न जन्यत इति वाच्यम्, एकस्मिन् कर्मणि आरम्भकसंयोगविरोधिविभाग-जनकत्वानारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वयोर्विरोधात्। अन्यथा विकस-त्कमलकुड्मलभङ्गप्रसङ्गात्। न च कारणविभागेनैव द्रव्यनाशात्पूर्वं देशान्तर-विभागः कुतो न जन्यत इति वाच्यम्, आरम्भकसंयोगविरोधिविभागवतोऽ-वयवस्य सति द्रव्ये देशान्तरविभागासम्भवात्। द्वितीयश्च यत्र हस्तक्रियया हस्ततरुविभागस्ततः शरीरेऽपि विभागप्रतीतिस्तत्र। न च शरीरतरुविभागे हस्तक्रिया कारणं व्यधिकरणत्वात्। शरीरे च क्रिया नास्त्येव, अवयविकर्मणो यावदवयवकर्मनियतत्वात्। अतस्तत्र कारणाकारणविभागेन कार्याकार्यविभागो जन्यत इति दिक्॥

१०४. प्रश्नः—संशयस्य लक्षणं विलिख्य परिष्कृत्य च तस्य कार-णानि निरूप्यन्ताम्।

उत्तरम्— अथ एकधर्मिकमिथोविरुद्धप्रकारकज्ञानं संशयः। वस्तुतस्तु—स्वीयैककोटिप्रकारतावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतापर-कोटिप्रकारताकज्ञानत्वं, तन्निष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताकविशेष्य-तानिरूपिततद्विरुद्धनिष्ठप्रकारताकज्ञानत्वं संशयत्वम्। ननु संशयस्य कानि कारणानीति चेत्तदोच्यते—साधारणधर्मज्ञानं संशयस्य कारणम्, यथा स्थाणुपुरुषसाधारणमुच्चैस्तरत्वधर्मं ज्ञात्वाऽयं स्थाणुर्न वेति संशेते। एवम-

साधारणधर्मज्ञानं संशयस्य कारणम्, यथा शब्दत्वस्य नित्यानित्यव्यवृत्तत्वेन शब्दे ज्ञातत्वाच्छब्दो नित्यो न वेति सन्दिग्धे। विप्रतिपत्तिस्तु शब्दो नित्यो न वेत्यादिशब्दात्मिका न संशयस्य कारणम्, शब्दव्याप्तिज्ञानादीनां निश्चयमात्रजनकत्वस्वभावात्, किन्तु तत्र शब्देन कोटिद्वयज्ञानं जन्यते, संशयस्तु मानस एव। एवं विषयस्य संशयम्प्रति ज्ञाने प्रामाण्यस्य भ्रमत्वस्य वा संशयः कारणम्। एवं व्यापकसंशयम्प्रति व्याप्यसंशयः कारणम्। सशयमात्रे तु धर्मिज्ञानं धर्मीन्द्रियसन्निकर्षो वा कारणमिति दिक्॥

१०५. प्रश्नः—भ्रमप्रमयोर्लक्षणमुल्लिख्य तयोः कारणं प्रदर्श्यताम्।

उत्तरम्—अथ तदभाववद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्ववदनुभवत्वं भ्रमस्य, भ्रमभिन्नानुभवत्वञ्च प्रमाया लक्षणम्। नन्वेवं शुक्तिरजतयोरिमे रजते इति ज्ञानं रजतांशेऽपि प्रमा न स्यात्तस्य भ्रमभिन्नत्वाभावादिति चेन्न, तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्ववदनुभवत्वं प्रमात्वमिति स्वीकारात्। अत्र-येन सम्बन्धेन यद्वत्ता, तेन सम्बन्धेन तद्वद्विशेष्यकत्वं, तेन सम्बन्धेन तत्प्रकारकत्वञ्च वाच्यं; तेन कपालादौ संयोगादिना घटादिज्ञाने नातिव्याप्तिः। भ्रमम्प्रति दोषस्य, प्रमाञ्च प्रति गुणस्य कारणताऽन्वयव्यतिरेकाभ्यां सिद्धा। तत्र गुणस्य प्रमाजनकता-प्रमा ज्ञानसामान्यकारणभिन्नकारणजन्या जन्यज्ञानत्वाद् अप्रमावदित्यनुमानेनापि सिद्धा। ननु प्रमाम्प्रति दोषाभाव एव कारणं, न तु गुणः, भ्रमञ्च प्रति गुणाभाव एव कारणं न तु दोष इति चेन्न, विनिगमनाविरहात्प्रमां प्रति दोषाभावस्येव गुणस्यापि, भ्रमञ्च प्रति गुणाभावस्येव दोषस्यापि कारणताया अन्वयव्यतिरेकाभ्यां सिद्धत्वादिति बोध्यम्॥

१०६, प्रश्न—प्रमात्वस्य स्वतोग्राह्यत्वं निरस्य परतोग्राह्यत्वमुपपाद्यताम्।

उत्तरम्—अथ मीमांसकाः प्रमात्वं स्वतोग्राह्यं = तज्ज्ञानविषयकतदप्रामाण्याविषयकज्ञानसमुदायग्राह्यमिति वदन्ति। तत्र—प्रभाकराणां मते - ज्ञानस्य स्वविषयकत्वाद् ज्ञानेन स्वस्मिन् गृह्यमाणे स्वगतं ज्ञानत्वमिव प्रमात्वमपि तेनैव ज्ञानेन गृह्यते। भट्टानां मते–ज्ञानमतीन्द्रियं; किन्तु ज्ञानजन्या ज्ञातता प्रत्यक्षा, तया च–इयं ज्ञातता घटविशेष्यकघटत्वप्रकारकज्ञानजन्या, घटवृत्तिघटत्वप्रकारकज्ञाततात्वादित्यादिरीत्या ज्ञानमनुमीयते, यत्र-तद्वद्विशेष्यकत्वावच्छिन्नतत्-

प्रकारकत्वरूपं प्रमात्वमपि प्रकारतया भासते। मुरारिमिश्राणाञ्च मते—अनुव्यवसायेन सप्रमात्वं ज्ञानं गृह्यते। एवं त्रयाणां मते तज्ज्ञानविषयकज्ञानेन तज्ज्ञानप्रमात्वं गृह्यते।

तन्न युक्तम्, यदि हि ज्ञानस्य प्रमात्वं स्वतो ग्राह्यं स्यात्तर्हि अनवधृतप्रमात्वसजातीयज्ञाने प्रमात्वसंशयो न स्यात्, तत्र हि—यदि ज्ञानं ज्ञातन्तर्हि त्वन्मते ज्ञानग्राहकसामग्र्या एव प्रमात्वग्राहकत्वात् प्रमात्वं ज्ञातमेवेति कथं संशयः? यदि ज्ञानं न ज्ञातन्तर्हि धर्मिज्ञानाभावे क्व संशयः? तस्माद्—इदं ज्ञानं प्रमा सफलप्रवृत्तिजनकत्वाद्, यन्नैवं तन्नैवं, यथाऽप्रमेत्यादिरीत्या ज्ञाने प्रमात्वमनुमेयम्। ननु प्रमात्वग्राहकसामग्रीसत्त्वे कथमग्रिमसंशयानुरोधात् प्रमात्वाग्रह इति चेन्न- अग्रिमसंशयानुरोधेन संशयजनकदोषस्य प्रमात्वनिश्चयप्रतिबन्धकत्वकल्पनादिति दिक्।

१०७. प्रश्नः—प्रमालक्षणे विशेषणस्य तद्वद्विशेष्यकत्वस्य सार्थक्यमुपपाद्यताम्।

उत्तरम्—ननु सर्वेषां ज्ञानानां यथार्थत्वात् प्रमालक्षणे तद्वद्विशेष्यकत्वं विशेषणं व्यर्थम्, तेन व्यवच्छेद्यस्य भ्रमस्याभावात्। न च रङ्गे रजतार्थिनः प्रवृत्तिर्न्यायनये भ्रमजन्या तव मते न स्याद् भ्रमस्याभावादिति वाच्यम्, तत्र दोषाधीनस्य पुरोवर्त्तिनि रजतभेदासंसर्गाग्रहाभावस्य हेतुत्वात्। रजते रजतार्थिनः प्रवृत्तावपि रजतभेदासंसर्गाग्रहाभाव एव कारणं, किन्तु स दोषानधीनः। न चान्यथाख्यातिः संभवति, येनाफलप्रवृत्तौ तस्याः कारणतोपपद्येत; रजतप्रत्यक्षकारणस्य रजतेन्द्रियसन्निकर्षस्याभावेन रङ्गे रजतबुद्धेरनुपपत्तेरिति चेन्न, रजतगोचररजतार्थिप्रवृत्तिं प्रति अन्वयव्यतिरेकाभ्यां रजतत्वविशिष्टज्ञानस्य हेतुतायाः क्लृप्ततया रङ्गगोचररजतार्थिप्रवृत्तिमपि प्रति तस्यैव हेतुतायाः कल्पनात्। न चात्र मानाभावः रङ्गे रजतार्थिप्रवृत्तिरिष्टप्रवृत्तिविषयविशिष्टज्ञानसाध्या प्रवृत्तित्वात् रजते रजतत्वप्रकारकप्रवृत्तिवदित्यनुमानस्यैव तत्र मानत्वात्। एवञ्च रङ्गे रजतत्वविशिष्टबुद्ध्यनुरोधात् ज्ञानलक्षणसन्निकर्षकल्पनेऽपि न क्षतिः, फलमुखगौरवस्यादोषत्वात्। अन्यथाख्यातौ च-रङ्गं रजततया जानामीति प्रत्यक्षमेव प्रमाणमिति तद्वारणाय प्रमालक्षणे तद्वद्विशेष्यकत्वं विशेषणमावश्यकमिति दिक्॥

१०८. प्रश्नः—व्याप्तिग्रहोपायम्प्रदर्श्य 'तर्कः क्वचिच्छङ्कानिवर्त्तकः' इति पद्यांशस्याशय उद्घाटयताम् ।

उत्तरम्—अथ साध्यनिरूपितहेतुनिष्ठव्याप्तिज्ञानम्प्रति अन्वयव्यतिरेकाभ्यां हेतुसाध्ययोः, सहचारज्ञानं कारणम् । एवं हेतौ साध्यव्यभिचारग्रहस्य व्याप्तिग्रहे प्रतिबन्धकत्वाद् व्याप्तिग्रहम्प्रति व्यभिचारज्ञानाभावः कारणम् , कार्यमात्रं प्रति प्रतिबन्धकाभावस्य कारणत्वात् । व्यभिचारास्फूर्त्तौ सकृदपि हेतुसाध्ययोः सामानाधिकरण्यदर्शनेन क्वचिद् व्याप्तिग्रहात्तत्र भूयोदर्शनं न कारणम् , किन्तु क्वचिद्व्यभिचारशंकोन्मूलनद्वारा व्याप्तिग्रहे भूयोदर्शनमुपयुज्यते । यत्र तु भूयोदर्शनादपि 'धूमो वह्निव्यभिचारी न वे'ति शङ्का नापैति, तत्र तादृशशङ्काऽपनयनार्थं 'धूमो यदि वह्निव्यभिचारी स्यात्तर्हि वह्निजन्यो न स्यात्' ( यतो वह्निजन्योऽतो न वह्निव्यभिचारी ) इति तर्कोऽपेक्ष्यते । यदि च तादृशतर्ककारणीभूतकार्यकारणभावग्रहेऽपि प्रतिबन्धिका 'कारणं विनाऽपि भविष्यति'इत्यादिशङ्का भवेत्तर्हि सा 'यदि कारणं विना कार्यं स्यात्तर्हि धूमार्थं वह्नेर्नियमत उपादानं तवैव न स्यादि'ति प्रवृत्तिव्याघातादपसारणीयेत्याशयेनाह—'तर्कः क्वचिच्छंकानिवर्त्तकः' इतीति दिक् ॥

१०९. प्रश्नः—उपाधेर्लक्षणमुपपाद्य तस्य मतभेदेन प्रयोजनं प्रदर्श्यताम् ।

उत्तरम्—अथ साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधेर्लक्षणम् । नन्वेवं काकः श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वं, वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वं, ध्वंसो विनाशी जन्यत्वादित्यत्र च भावत्व नोपाधिः स्यात् ; श्यामत्वस्य पटादावपि सत्त्वेन शाकपाकजत्वस्य, प्रत्यक्षत्वस्यात्मादावपि सत्त्वेनोद्भूतरूपवत्त्वस्य, विनाशित्वस्य च प्रागभावेऽपि सत्त्वेन भावत्वस्य साध्यव्यापकत्वाभावादिति चेन्न, यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थे तात्पर्यात् । एवञ्च—प्रथमे-मित्रातनयत्वावच्छिन्नश्यामत्वस्य व्यापकं शाकपाकजत्वं तदवच्छिन्नसाधनाव्यापकञ्च, द्वितीये-बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वस्य व्यापकमुद्भूतरूपवत्त्वं तदवच्छिन्नसाधनाव्यापकञ्च, तृतीये च—जन्यत्वावच्छिन्नविनाशित्वस्य व्यापकं भावत्वं तदवच्छिन्नसाधनाव्यापकञ्चेति सर्वोपपत्तेः ।

हेतावुपाधिव्यभिचारेण साध्यव्यभिचारानुमानमुपाधेः प्रयोजनम् । एवञ्च-यत्र शुद्धसाध्यव्यापक उपाधिस्तत्र शुद्धेनोपाधिव्यभिचारेण साध्यव्यभिचारानुमानम्, यथा–पर्वतो धूमवान् वह्नेरित्यत्र वह्निर्धूमव्यभिचारी आर्द्रेन्धनसंयोगव्यभिचारित्वादिति । यत्र तु- किञ्चिद्धर्मावच्छिन्नसाध्यव्यापक उपाधिस्तत्र तद्धर्मवत्युपाधिव्यभिचारेण साध्यव्यभिचारानुमानम्, यथा-काकः श्यामो मित्रातनयत्वादित्यत्र मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रातनये शाकपाकजत्वव्यभिचारित्वादिति ।

केचित्तु—सत्प्रतिपक्षोत्थापनमुपाधेः प्रयोजनम्, अयोगोलकं धूमवद्वह्नेरित्यत्र अयोगोलकं धूमाभाववद् आर्द्रेन्धसंयोगाभावादिति सत्प्रतिपक्षसंभवात् । एवञ्च-साधनव्यापकोऽपि क्वचिदुपाधिः, यथा–करका पृथिवी कठिनसंयोगवत्त्वादित्यत्रानुष्णाशीतस्पर्शवत्त्वम् ! न चात्र स्वरूपासिद्धिरेव दूषणमिति वाच्यम्, सर्वत्रोपाधेर्दूषणान्तरसाङ्कर्यात् । एतत्पक्षे च–साधनव्यापकः पक्षावृत्तिरुपाधिरिति वदन्ति ॥

११० प्रश्नः—शब्दोपमानयोरनुमानविधयैव प्रामाण्यं, न तु पृथगिति वैशेषिकमतमुपपाद्य निरस्यताम् ।

उत्तरम्—अथ वैशेषिकाणां मते प्रत्यक्षमनुमानञ्च प्रमाणम्, शब्दोपमानयोस्तु अनुमानविधयैव प्रामाण्यं, न तु पृथक् । तथा हि–लौकिकस्य वैदिकस्य वा शब्दस्य स्थले—दण्डेन गामानयेत्यादिपदानि, स्वर्गकामो यजेतेत्यादिपदानि वा तात्पर्यविषयस्मारितपदार्थसंसर्गज्ञानपूर्वकाणि, आकांक्षादिमत्पदकदम्बत्वाद्, घटमानयेतिपदकदम्बवदिति, एते पदार्थास्तात्पर्यविषयपरस्परसंसर्गवन्तः, योग्यतादिमत्पदोपस्थापितत्वात्, तादृशपदार्थवदिति वा, एवमुपमानस्थले—गवयपदं गवयत्वप्रवृत्तिनिमित्तकं, वृत्त्यन्तरेऽसति वृद्धैस्तत्र प्रयुज्यमानत्वाद्, असति वृत्त्यन्तरे वृद्धैर्यद्यत्र प्रयुज्यते तत्तत्प्रवृत्तिनिमित्तकं, यथा गोपदं गोत्वप्रवृत्तिनिमित्तकमिति, पक्षधर्मताबलाद् गवयवत्वप्रवृत्तिनिमित्तकत्वं भासयता—गवयपदं सप्रवृत्तिनिमित्तकं, साधुपदत्वादिति वाऽनुमित्यात्मकबोधेन व्यवहारादिनिर्वाहाच्छब्दोपमानयोरनुमानगतार्थत्वान्न पृथक् प्रामाण्यम् । तन्न युक्तम्, व्याप्तिज्ञानं विनैव शाब्दबोधादेरनुभवसिद्धत्वात् । शब्दश्रवणाद्यनन्तरं सर्वत्र व्याप्तिज्ञाने प्रमाणं नास्ति,

तथापि, शाब्दबोधादिस्थले सर्वत्र यदि व्याप्तिज्ञानं प्रकल्प्य शब्दोपमाने अनुमानेऽन्तर्भाव्येते, तर्हि विनिगमनाविरहादनुमितिस्थले सर्वत्र पदज्ञानं कल्पयित्वाऽनुमानं शब्दे कुतो नान्तर्भाव्यते ? तस्माच्छब्दोपमानयोः पृथगेव प्रामाण्यमिति दिक् ॥

१११. प्रश्नः-अनुमानभेदान् निरूप्य व्यतिरेकव्याप्तिर्निरुच्यताम् ।

उत्तरम्—अथानुमानं त्रिविधं, केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् । तत्र असद्विपक्षः केवलान्वयी, यथा—इदं ज्ञेयम्, अभिधेयत्वादित्यादौ, तत्र हि—सर्वस्यैव ज्ञेयत्वाद् निश्चितसाध्याभाववतो विपक्षस्यासत्त्वम् । एवम्—असत्सपक्षः केवलव्यतिरेकी, यथा—पृथिवी इतरेभ्यो भिद्यते, गन्धवत्त्वादित्यादौ, तत्र हि—इतर (जलादित्रयोदश) भेदस्य पूर्वमसिद्धतया निश्चितसाध्यवतः सपक्षस्यासत्त्वम् । एवं—सत्सपक्षविपक्षोऽन्वयव्यतिरेकी, यथा—पर्वतो वह्निमान्, धूमादित्यादौ, तत्र हि—सपक्षस्य महानसादेर्विपक्षस्य च जलादेः सत्त्वम् ।

तत्र व्यतिरेकिणि व्यतिरेकव्याप्तिज्ञानं कारणम्, तद्विषयीभूता व्यतिरेकव्याप्तिश्च—साध्याभावव्यापकीभूताभावप्रतियोगित्वम् । अत्रेदं बोध्यम्—येन सम्बन्धेन यदवच्छिन्नम्प्रति येन सम्बन्धेन यदवच्छिन्नस्य व्यापकता गृह्यते, तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभाववत्ताज्ञानात् तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावस्य सिद्धिः । इत्थञ्च-यत्र संयोगसम्बन्धेन धूमत्वावच्छिन्नम्प्रति संयोगसम्बन्धेन वह्नित्वाच्छिन्नस्य व्यापकता गृह्यते, तत्र संयोगसम्बधावच्छिन्नवह्नित्वाच्छिन्नप्रतियोगिताकाभाववत्ताज्ञानाद् जलादौ संयोगसम्बन्धावच्छिन्नधूमत्वावच्छिन्नप्रतियोगिताकाभावः सिद्ध्यतीति दिक् ।

११२. प्रश्नः—अर्थापत्तेः प्रमाणान्तरत्वमापाद्य निरस्यताम् ।

उत्तरम्—अथार्थापत्तिरिदम्—अर्थस्यापत्तिः कल्पनेति व्युत्पत्तौ निष्पन्नं प्रमाविशेषे, अर्थस्यापत्तिः कल्पना यस्मादिति व्युत्पत्तौ च निष्पन्नं प्रमाणविशेषे प्रयुज्यते । तत्र—उपपादककल्पना अर्थापत्तिः प्रमा, उपपाद्यज्ञानञ्चार्थापत्तिः प्रमाणम् । तथा हि—यदा देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्राद्, गृहेऽसत्त्वञ्च प्रत्यक्षादवगतं, तथा देवदत्ते शतवर्षजीवित्वस्योपपाद्यस्यान्यथाऽनुपपत्त्या तस्योपपादकं बहिःसत्त्वं कल्प्यते, एवं 'पीनो देवदत्तो दिवा न भुंक्ते' इति ज्ञानानन्तरं देवदत्ते दिवाभोजनाभावविशिष्टपीनत्वस्योपपाद्यस्यान्यथाऽनु-

पपत्त्या तस्योपपादकं रात्रिभोजनं कल्प्यते इत्यर्थापत्तिः प्रमाणान्तरमिति मीमांसका वदन्ति।

तन्न युक्तम्, तयोः प्रथमे—देवदत्तो बहिःसत्त्ववान् शतवर्षजीवित्वे सति गृहासत्त्वादिति, द्वितीये च—देवदत्तो रात्रिभोजी दिवाभोजनाभावविशिष्ट-पीनत्वादित्यनुमित्यैव निर्वाहेऽर्थापत्तेरनुमानगतार्थत्वात्प्रमाणान्तरत्वानुपपत्ते-रिति दिक्॥

**११३. प्रश्नः—कार्यताज्ञानं प्रवर्त्तकमिति प्रभाकरमतं सोपपत्तिक-मुपपाद्य निरस्यताम्।**

उत्तरम्—अथ कार्यताज्ञानं प्रवर्तकम्, तथा हि प्रवृत्तिम्प्रति साक्षादसा-धनीभूतेन ज्ञानेन प्रवृत्तौ जननीयायां चिकीर्षातिरिक्तं नापेक्ष्यते, चिकीर्षा च कृतिसाध्यताज्ञानसाध्या, इच्छायाः स्वप्रकारप्रकारकधीसाध्यत्वनियमात्, चि-कीर्षा हि—कृतिसाध्यत्वप्रकारकेच्छा, तत्र कृतिसाध्यत्वं प्रकारः, तत्प्रकारकज्ञानं चिकीर्षायां कारणं, चिकीर्षाद्वारा च प्रवृत्तौ हेतुः। नन्वेवं मधुविषसम्पृक्तान्न-भोजने चैत्यवन्दने च प्रवृत्त्यापत्तिः, तत्रापि कार्यताज्ञानसत्त्वादिति चेन्न, बलवदनिष्टाननुबन्धीष्टसाधनता-शौचाद्यन्यन्तरज्ञानजन्यकार्यताज्ञानस्य प्रवर्त्त-कत्वादिति प्रभाकरा वदन्ति। तन्न युक्तम्, बलवदनिष्टाननुबन्धीष्टसाधनता-शौचाद्यन्यतरज्ञानजन्यकृतिसाध्यताज्ञानापेक्षया लाघवाद् बलवदनिष्टाननुब-न्धीष्टसाधनताविषयककृतिसाध्यताज्ञानस्यैव प्रवृत्तिम्प्रति हेतुताया औचित्यात्। न चासिद्धस्य साध्यत्वात् सिद्धस्य च साधनत्वात् च साध्यत्वसाधनत्वयोर्विरो-धादेकेनैव युगपदिष्टसाधनत्वकृतिसाध्यत्वे ज्ञातुं न शक्येते इति वाच्यम्, एककालीनसाध्यत्वसाधनत्वयोर्विरोधेऽपि यत्किञ्चित्कालीनसाध्यत्वस्य यत्कि-ञ्चित्कालीनसाधनत्वेनाविरोधान्निर्विशेषितयोः सामान्यतः कृतिसाध्यत्वेष्ट-साधनत्वयोर्ज्ञानस्य सम्भवात्तस्यैव च प्रवृत्तिहेतुतायाः स्वीकारेण सामञ्जस्या-दिति दिक्॥

**११४. प्रश्नः—अत्र प्रभाकरानुयायिनां नव्यानां मतमुपस्थाप्य निराक्रियताम्।**

उत्तरम्—अथ बलवदनिष्टाननुबन्धिकाम्यसाधनता-शौचाद्यन्यतरज्ञानज-न्यं ममेदं कृतिसाध्यमिति ज्ञानं न प्रवर्त्तकम्, अनागते—सामान्यलक्षणप्रत्या-

सत्त्यनङ्गीकारेण तादृशप्रत्यक्षस्य, पक्षज्ञानाभावेन तादृशानुमितेश्चासम्भवात् । किन्तु यादृशस्य कृतिसाध्यं यद् दृष्टं, तादृशत्वं स्वस्मिन् प्रतिसन्धाय तत्र प्रवर्त्तते । तेनौदनकामस्य तत्साधनताज्ञानवतस्तदुपकरणवतः पाकः कृतिसाध्यस्तादृशश्चाहमिति विज्ञाय पाके प्रवर्त्तत इति प्रभाकरानुयायिनो नव्या वदन्ति । तन्न युक्तम्, स्वकल्पितलिप्यादिप्रवृत्तौ, यौवने च कामोद्भेदादिना संभोगादिप्रवृत्तौ स्वातिरिक्तस्य कस्यापि कृत्या साध्यं किमपि द्रष्टुं न शक्यमिति यादृशस्य कृतिसाध्यं यद् दृष्टं, तादृशत्वस्य स्वस्मिन् प्रतिसन्धानासम्भवादिति दिक् ॥

११५. प्रश्नः—**नैयायिकमतेन विध्यर्थो निपुणं निरूप्यताम् ।**

उत्तरम्—अथ नैयायिकमतेन—बलवदनिष्टाननुबन्धित्वेष्टसाधनत्वकृतिसाध्यत्वानि विध्यर्थः, तेषां ज्ञानं प्रवृत्तिम्प्रति हेतुः, अत एव च मधुविषसम्पृक्तान्नभोजने, चैत्यवन्दने, सुमेरुशृङ्गाहरणे च न प्रवृत्तिः । बलवदनिष्टाननुबन्धित्वं बलवद्द्वेषविषयदुःखजनकत्वम्, तद्घटकबलवद्द्वेषः, इष्टसाधनत्वघटकेच्छा, कृतिसाध्यत्वघटककृतिश्च इदानीन्तनत्वेन विशेषणीया, अतः — आस्तिकोऽप्यगम्यागमने प्रवर्त्तते, तज्जन्यसुखे उत्कटरागेण तदानीं तज्जन्यनरके बलवद्द्वेषानुदयात् ; एवं तृप्तो भोजने न प्रवर्त्तते, तदानीन्तनेच्छाऽभावात् ; बालश्च राजकार्ये न प्रवर्त्तते, तदानीं तत्र कृतेरसम्भवादिति दिक् ॥

११६. प्रश्नः—**इष्टसाधनत्वादेर्विध्यर्थत्वे कथं नित्ये कर्मणि प्रवृत्तिरुपपद्येतेति विविच्यताम् ।**

उत्तरम्—नन्विष्टसाधनत्वादिर्विध्यर्थ इति नैयायिकमते—'अहरहः सन्ध्यामुपासीते'त्यादि—साम्यासाहःपदादिसहकृतवैदिकवचनेन बोधिते नित्यसन्ध्योपासनादौ कर्मणि प्रवृत्तिर्नोपपद्येत, तत्र फलाभावेनेष्टसाधनत्वज्ञानाभावादिति चेन्न, 'सन्ध्यामुपासते ये तु सततं शंसितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥' इत्यादिवचनेन पापध्वंसपूर्वकब्रह्मलोकावाप्तिफलस्य तत्र सत्त्वेनेष्टसाधनताज्ञानसम्भवात् । न चैवं तत्र काम्यत्वात् नित्यत्वमुच्छिद्येत, ग्रहणश्राद्धादौ नित्यत्वनैमित्तिकत्वयोरिव नित्यत्वकाम्यत्वयोरप्यविरोधात् । न चैवमपि कामनाऽभावे तदकरणात् पापं नोत्पद्येतेति वाच्यम्, त्रिकालस्तवपाठादाविव तत्रापि कामनासत्त्वस्यैव कल्पनात् । न च नित्यकर्मप्रवृत्तौ कृतिं-

साध्यतादिज्ञानमेव कारणं, न त्विष्टसाधनताज्ञानमिति वेदबोधितकार्यतादिज्ञानादेव तत्र प्रवृत्तेरुपपत्तौ किमर्थं नित्यस्य कर्मणः काम्यत्वं कल्पनीयमिति वाच्यम्, अन्वयव्यतिरेकाभ्यां प्रवृत्तिमात्रम्प्रतीष्टसाधनताज्ञानस्य हेतुतायाः सिद्धत्वादिष्टसाधनत्वमविज्ञाय तादृशकार्यतादिज्ञानसहस्रेणापि प्रवृत्तेरसम्भवात् ॥ केचित्तु —पापानुत्पत्तिरेव नित्यस्य कर्मणः फलम् । ननु तस्याः पापप्रागभावरूपत्वादनादित्वेनाजन्यत्वात् कथं तामुद्दिश्य नित्ये कर्मणि प्रवृत्तिरुपपद्येतेति चेन्न, नित्ये कर्मणि कृते पापप्रागभावः, अकृते च पापप्रागभावाभावः पापरूपः; एवं पापप्रागभावस्य सत्त्वे दुःखप्रागभावः, असत्त्वे च दुःखप्रागभावाभावो दुःखरूप इत्यन्वयव्यतिरेकेभ्यो दुःखप्रागभावं प्रत्यपि नित्यकर्मणः कारणतायाः सिद्धत्वाद्दुःखप्रागभावरक्षणायैव तत्र प्रवृत्तेरुपपत्तेरिति वदन्ति ॥

११७. प्रश्नः—'न कलञ्जं भक्षयेदि'त्यत्र कलञ्जभक्षके विध्यर्थान्वितनञर्थान्वयस्यानुपपत्तिरुपस्थाप्य समाधीयताम् ।

उत्तरम्—ननु 'न कलञ्जं भक्षयेदि' त्यत्र कलञ्जभक्षणे विध्यर्थेष्टसाधनत्वाद्यन्वितनञर्थाभावस्य कथमन्वयः ? तत्रेष्टसाधनत्वकृतिसाध्यत्वयोः सत्त्वात्तयोरभावस्य बोधयितुमशक्यत्वादिति चेन्न, विधेः कृतिसाध्यत्वादिषु त्रिषु शक्तिस्वीकारेण क्वचित्कस्यचिद् विध्यर्थस्य बोधाङ्गीकारात्—कलञ्जभक्षणे इष्टसाधनत्वकृतिसाध्यत्वाभावयोर्बाधात् तत्रेष्टसाधनत्वकृतिसाध्यत्वे न विध्यर्थः, किन्तु—बलवदनिष्टाननुबन्धित्वमात्रम्, तदभावस्य नञा बोधनात्तत्र विध्यर्थान्वितनञर्थान्वयस्योपपत्तेः । न च प्रवृत्तिम्प्रति बलवदनिष्टाननुबन्धित्वविविशिष्टकृतिसाध्यत्वविशिष्टेष्टसाधनत्वज्ञानत्वेनैकस्यैव हेतुत्वं लाघवात्, न तु कृतिसाध्यत्वादिप्रत्येकविषयकज्ञानत्वेन गौरवादिति विधेरपि विशिष्टमेव शक्यं, न तु पृथक् पृथगिति स्थितौ का गतिरिति वाच्यम्, विशेष्यवति प्रतीयमानो विशिष्टाभावो विशेषणाभावे पर्यवस्यतीति नियमादिष्टसाधनत्वादिमति कलञ्जभक्षणे बोध्यमानस्य विशिष्टाभावस्य बलवदनिष्टाननुबन्धित्वाभावे पर्यवसानेन तत्र सामञ्जस्यादिति दिक् ॥

११८. प्रश्नः—श्येनस्य हिंसात्वं निपुणं निराकुर्वता काशीमरणोद्देशेन कृतस्य शिवपूजादेर्हिंसात्वं निरस्यताम् ।

उत्तरम्—ननु 'श्येनेनाभिचरन् यजेते'ति विहितश्येनस्य मरणानुकूलव्या-

पारत्वाद् हिंसात्वेन 'मा हिंस्यात्सर्वा भूतानी'ति निषेधविषयत्वान्नरकसाधनत्वेन बलवदनिष्टाननुबन्धित्वरूपविशेषणबाधात्कथं तत्र बलवदनिष्टाननुबन्धित्व-विशिष्टकृतिसाध्यत्वविशिष्टसाधनत्वस्य विध्यर्थस्य बोधः ? न च यज्ञीयपश्वा-लम्भनानुरोधेन 'मा हिंस्यादि'ति निषेधस्य वैधहिंसेतरहिंसापरत्वान्न श्येने निषेधविषयतेति वाच्यम्, 'अभिचारमहीनञ्च त्रिभिः कृच्छ्रैर्व्यपोहती'ति प्रायश्चित्तोपदेशार्थवत्त्वाय तन्निषेधविधेरनुपदिष्टप्रायश्चित्तहिंसेतरहिंसापरत्वस्यैव स्वीकारात् श्येने निषेधविषयत्वाक्षतेः। न च साक्षात्परम्परासाधारण) मरणानुकूलव्यापारमात्रस्य हिंसात्वे खड्गकूपादिकाराणां हिंसकत्वापत्तिः, गललग्नान्नभक्षणजन्यमरणे स्वात्मघातित्वापत्तिश्चेति वाच्यम्, मरणोद्देश्यकत्वेन तस्य विशेषणीयत्वादिति चेन्न, श्येने बलवदनिष्टाननुबन्धित्वस्य विध्यर्थत्वाभावात्। वस्तुतस्तु—श्येने हिंसात्ववारणाय-अदृष्टाद्वारक—मरणोद्देश्यक-(तादृश) मरणानुकूलव्यापारमात्रस्य हिंसात्वं मन्यते, अतएव काशीमरणोद्देशेन कृतस्य शिवपूजादेरपि न हिंसात्वम्। न च साक्षान्मरणजनकव्यापारस्यैव हिंसात्वाभ्युपगमेन श्येनादेर्हिंसात्ववारणादलं तादृशगुरुतरस्य हिंसात्वाश्रयणेनेति वाच्यम्, तथाऽभ्युपगमे ब्राह्मणस्य व्रणपाकपरम्परया मारके खड्गघाते हिंसात्वानुपपत्तेः। केचित्तु—मरणफलकव्यापार एव फलं श्येनस्य, न तु मरणम्, तेन श्येनजन्यखड्गघतारूपा हिंसाऽभिचारपदार्थः, तस्य च पापजनकत्वम्, अतः श्येनस्य वैधत्वात् पापाजनकत्वेऽपि अग्रिमपापं प्रतिसन्धाय सन्तो न प्रवर्त्तन्ते तत्रेत्याहुः।

११९. प्रश्नः—आचार्यमतेन विध्यर्थं निरूपयता वेदस्यापौरुषेयत्व-मुपपाद्यताम्।

उत्तरम्—अथोदयनाचार्याः—आप्ताभिप्रायो विध्यर्थः, स एवेष्टसाधन-ताऽनुमापकः, इष्टसाधनताज्ञानञ्च प्रवर्त्तकम्। पाकं कुर्याः, पाकं कुर्यामित्यादौ लिङो मध्यमोत्तमपुरुषयोराज्ञाऽध्येषणरूपेच्छावाचित्वमिव पाकं कुर्यादित्यादौ तस्य प्रथमपुरुषेऽपीच्छावाचित्वम्, बलवदनिष्टाननुबन्धीष्टसाधनकृतिसाध्यत्वा-पेक्षयेच्छात्वेन विधिशक्तौ लाघवात्। एवञ्च 'स्वर्गकामो यजेते' त्यादौ यागः स्वर्गकामकृतिसाध्यतया आप्तेष्ट इत्यादिबोधः, ततश्च यागो मम स्वर्गकामस्य बलवदनिष्टाननुबन्धीष्टसाधनं मत्कृतिसाध्यतयाऽऽप्तेनेष्यमाणत्वात् मन्मात्र-

कृतिसाध्यतयेष्यमाण-मद्भोजनवदित्याद्यनुमाय तत्र प्रवर्त्तते। कलञ्जभक्षणादौ तु आप्तेष्टत्वाभावेन तद्धेतुकेष्टसाधनत्वज्ञानाभावान्न प्रवर्त्तते। ननु वेदे वक्तुरभावात्कस्येच्छा तत्र लिङा बोधनीयेति चेन्न, कुमार्याः पुंयोगे गर्भस्येव श्रुतेः, पौरुषेयत्वे विधेर्मानत्वात् वक्तृभिन्नेच्छाया बोधने विधेः सामर्थ्याभावात्। न च वेदोऽपौरुषेयः अस्मर्यमाणकर्त्तृकत्वादित्यनुमानन्तत्र बाधकमिति वाच्यम्, कपिलकणादगौतमादिभिस्तच्छिष्यैश्चाद्यपर्यन्तं तत्कर्त्तृस्मरणस्य प्रतीयमानत्वेनोक्तहेतोस्तत्र स्वरूपासिद्धत्वात्। एवं वेदस्य सकर्त्तृकत्वे—'छन्दांसि जज्ञिरे तस्मादि'त्यादिश्रुतिः, 'प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते' इत्यादिस्मृतिश्च प्रमाणम्। न चैवं वेदस्य पौरुषेयत्वे तत्कर्त्तुः भ्रमप्रमादादिदोषसम्भवाद्वेदेऽप्रामाण्यमापद्येतेति वाच्यम्, वेदकर्त्तुरीश्वरस्य नित्यसर्वज्ञत्वेन भ्रमादिदोषशून्यत्वात्। न च वेदस्य नित्यत्वम्, अनित्यवर्णसमुदायनिष्ठानुपूर्वीविशेषरूपस्य वेदस्यानित्यत्वादित्यभिप्रयन्तीति दिक्॥

**१२०. प्रश्नः—भावनाख्यसंस्कारे प्रमाणम्प्रदर्श्य तत्र किं कारणमिति विविच्यताम्।**

उत्तरम्—अथानुभवानन्तरं कदाचित् स्मरणं, कदाचिच्च प्रत्यभिज्ञा जायते, न च तत्रानुभवो व्यापारमन्तरा कारणतामर्हति, अन्यथासिद्धिशून्यत्वविशिष्टकार्याव्यवहितपूर्वक्षणवृत्तिस्वस्वव्यापारकत्वस्यैव कारणतात्वादित्यनुभवस्य तत्र कारणत्वोपपत्तये तद्व्यापारतया भावनाख्यसंस्कारः कल्प्यते। न च प्रत्यभिज्ञायाः संस्कारजन्यत्वात् स्मृतित्वापत्तिः, संस्कारजन्यत्वस्य स्मृतित्वाप्रयोजकत्वात्। ननु कीदृशोऽनुभवो भावनाख्यसंस्कारे कारणमिति चेदुच्यते—भावनाख्यसंस्कारम्प्रति उपेक्षान्यनिश्चयात्मकोऽनुभवः कारणम्। तत्र—उपेक्षात्मकनिश्चयादुपेक्षान्यसंशयाच्च तादृशसंस्कारस्यानुत्पत्तेरुपेक्षान्यपदं संशयरदञ्चोपात्तम्। न च स्मरणम्प्रत्युपेक्षान्यनिश्चयत्वेन, तादृशसंस्कारम्प्रति चानुभवत्वेन कारणतास्वीकारादेवोपेक्षादिस्थले स्मृतिप्रसङ्गवारणात्तथैवास्त्विति वाच्यम्, तथा स्वीकारे उपेक्षादिस्थले तादृशसंस्कारकल्पने गौरवात्तादृशसंस्कारम्प्रति उपेक्षान्यनिश्चयत्वेन कारणताया एव न्याय्यत्वादिति दिक्॥

**१२१. प्रश्नः—धर्माधर्मौ कयोः कारणे, केन जन्यौ, केन नाश्यौ,**

किञ्च तयोः प्रमाणमिति प्रतिपाद्य 'नाभुक्तं क्षीयते कर्म' त्यादिवचनस्य 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुने' त्यादिवचनेन सहापन्नं विरोधं परिहरता वीचितरङ्गन्याय-कदम्बगोलकन्याययोर्वैलक्षण्यं समीक्ष्यताम् ।

उत्तरम्—अथ स्वर्गादिसकलसुख-तत्साधनशरीरेन्द्रियादीनां साधनं विहितकर्मजन्यो धर्मः, एवं-नरकादिसकलदुःख-तत्साधनशरीरेन्द्रियादीनां कारणं निषिद्धकर्मजन्योऽधर्मः । इमौ मिथ्याज्ञानजन्यवासनाजन्यौ, अत एव तत्त्वज्ञाननष्टमिथ्याज्ञानकेन रागद्वेषमोहात्मकवासनोत्पत्तिरहितेन कृते अपि सुकृतदुष्कृतकर्मणी धर्माधर्मावुत्पादयितुं नार्हतः । एवमिमौ कर्मनाशाजलस्पर्श-प्रायश्चित्तान्यतरेण भोगेन वा ज्ञानेन वा नाश्यौ । तत्र-यागदेर्धर्मो ब्रह्महत्यादेश्चाधर्मो व्यापारतया कल्प्येते, तयोरभावे हि—यागादेर्ब्रह्महत्यादेश्च चिरविनष्टतया निर्व्यापारतया च कालान्तरभाविनं स्वर्गादिं नरकादिञ्च प्रति अन्यथासिद्धिशून्यत्वविशिष्टकार्याऽव्यवहितपूर्वक्षणवृत्तित्व-स्वव्यापारान्यतरकत्वरूपा कारणता नोपपद्येत । उक्तञ्च—'चिरध्वस्तं फलायालं न कर्मातिशयं विना' इति ।

ननु यागादेर्ब्रह्महत्यादेश्च स्वस्वध्वंस एव व्यापारः स्यादिति स्वीकारेणैव यागादेर्ब्रह्महत्यादेश्च स्वर्गादिं नरकादिञ्च प्रत्युक्तकारणताया उपपत्तावलं धर्माधर्मयोः कल्पनयेति चेन्न, तथा स्वीकारे—गङ्गाजलस्नानस्य स्वर्गम्प्रति, ब्राह्मणशोणितपानस्य च नरकम्प्रति तादृशकारणताया उपपत्तये अनन्तानां गङ्गाजलसंयोगध्वंसानां ब्राह्मणशोणितपाननाशानाञ्च व्यापारत्वकल्पने गौरवाल्लाघवाच्चैकस्य धर्मस्याधर्मस्य च व्यापारत्वकल्पनाया एव न्याय्यत्वात् ।

यदि च धर्माधर्मौ न स्यातान्तर्हि तयोः कर्मनाशाजलस्पर्शादि—प्रायश्चित्ताद्यन्यतरेण नाश्यत्वं नोपपद्येत । न च यागादि—ब्रह्महत्याद्योस्तेन नाशः प्रतिबन्धो वा विधातुं शक्यः, तयोः पूर्वमेव नष्टत्वादिति धर्माधर्माववश्यकल्प्यौ ॥

ननु भोगमन्तरा धर्माधर्मौ न क्षीयेते इत्यर्थबोधकं 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपो'त्यादिवचनं विरुणद्धि, ज्ञाने सर्वकर्मनाशकताया बोधकं 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'—इत्यादिवचनमिति चेन्न, कर्मपदस्य—'नाभुक्तं क्षीयते कर्म'-

त्यादौ प्रारब्धकर्मपरत्वात्, 'ज्ञानाग्निः सर्वकर्माणि' 'क्षीयन्ते चास्य कर्माणी'-त्यादौ च प्रारब्धेतरकर्मपरत्वादुभयोः सामञ्जस्यात् ।

अथ शब्दस्य श्रोत्रेन्द्रियेण समवायसन्निकर्षद्वारा प्रत्यक्षं भवतीति श्रोत्रे शब्दोत्पत्तिरावश्यकी, सा चोपपद्यते-वीचितरङ्गन्यायात् कदम्बगोलकन्यायाद्वा । यत्र-जलेषु कस्मिंश्चिदतिवेगवति दृढतरे महाद्रव्ये शिलादौ पतिते तं वेष्टमाना वीचिरुद्गच्छति, तस्या अपरस्तरङ्गस्तदपेक्षाधिकदेशव्यापी जायते, एवं क्रमेण समुद्गता तरङ्गधारा तटे समाप्नोतीति वीचितरङ्गन्यायाद्-मृदङ्गावच्छिन्नाकाशे समुत्पन्नात्प्रथमशब्दाद् बहिर्दशदिगवच्छिन्नोऽन्यः शब्दो जायते, तस्माच्छब्दादपरः शब्दस्तदपेक्षाधिकदेशव्यापी समुद्गच्छति, एवं क्रमेण श्रोत्रे समुत्पन्नः शब्दो गृह्यते । एवं कदम्बगोलके सर्वभागावच्छेदेन युगपत्केसराः समुद्गच्छन्तीति कदम्बगोलकन्यायात्-तादृशादाद्यशब्दाद् दशदिक्षु युगपद् दश शब्दा उत्पद्यन्ते, तेषु प्रत्येकशब्दाद् दशदिक्षु युगपद् दशशब्दा जायन्ते, एवं क्रमेण श्रोत्रे समुत्पन्नः शब्दो गृह्यते ।

तयोर्न्याययोः—वीचितरङ्गन्यायाश्रयणमेव न्याय्यम्, कदम्बगोलकन्यायाश्रयणे दशदशशब्दानां तत्तत्प्रागभावानां तत्तत्कार्यकारणभावानाञ्च कल्पने गौरवादिति प्राचीनाः । कदम्बगोलकन्यायाश्रयणमेव युक्तम्, तथा सति दशशब्दोत्पादनशक्तेर्यन्त्रद्वारा एकदिगभिमुखीकरणेन सम्यग् यान्त्रिकशब्दग्रहणस्योपपत्तेरित्याधुनिकाः ।

इति गुणनिरूपणम् ।

---

मुद्रक : विद्याविलास प्रेस, वाराणसी ।

